# सारस्वती सुषमा

## वाराणसेयसंस्कृतविश्वविद्यालयपत्रिका

[ त्रैमासिकी ]




२४ वर्षे ४ अङ्कः

वै० संवत् २०२६

प्रकाशनतिथिः

फाल्गुनपूर्णिमा, वै० सं० २०२६
( मार्च, १९७० ई० )

## सूचना

अस्यास्त्रैमासिकपत्रिकायास्तुरीयाङ्कस्य प्रकाशनान्त एवाग्रिमवर्षस्य पत्रिकाया वार्षिकं मूल्यं कृपया सप्तरूप्यकमितं धनादेश-( मनी आर्डर ) द्वारा यथाशीघ्रं ग्राहकैर्नूनं प्रेषणीयमिति सादरं निवेदयति ।

सम्पादकः



# सारस्वती सुषमा

## वाराणसेयसंस्कृतविश्वविद्यालयपत्रिका

[ त्रैमासिकी ]

प्रधानसम्पादकः

**श्रीबदरीनाथशुक्लः**

सहायकसम्पादकः

**उमाशङ्करत्रिपाठी**




**२४ वर्षे ४ अङ्कः**

# विषयानुक्रमणिका





# सम्पादकीयम्

सारस्वतीसुषमायाश्चतुर्विंशवर्षस्य चतुर्थं चरममङ्कं पाठकानां करगतं कुर्वतो मे महान् मनस्तोषः । सुषमया संस्कृतवाङ्मयस्य विभिन्नशाखानां विभिन्नेषु विषयेषु विदुषां गवेषणापूर्णान् लेखान् प्रकाश्य संस्कृतशिक्षाजगत् कियदुपक्रियमाणमस्तीति विदितमेव विद्यते विद्यावताम् । न्यूनता केवलमियमेवावर्तत यदियं यथासमयं प्रकाशनं प्राप्य पाठकानां पुरस्तान्नोल्लसति स्म, मन्ये, तस्या अपि निरासः ऐषमोऽन्वभाव्येव पण्डितजनैः । आङ्गलभाषया हिन्दीभाषया च लिखितानां गभीरविषयविवेचकलेखानां प्रकाशनेन पत्रिकैषा संस्कृतेतरशिक्षासंस्थास्वपि प्राप्तप्रसारा तत्रत्यानां विदुषामनुसन्धातॄणां च मनोविनोदं वितन्वत्यनुभूयते ।

सम्पादकीये सर्वलेखानां सारसूचनविषयेऽपि बहुभिर्विद्वद्भिर्विद्यार्थिभिश्च लाभः सन्तोषश्चानेकधा प्रकटित इति द्विगुणितोत्साहैरस्माभिः पत्रिकाया अपरैरपि शास्त्रीयैरनुशीलनैः प्रसाधनं कर्तुं संकल्प्यते ।

एभिः कतिपयैः शब्दैः पत्रिकाग्राहकेभ्यो नववर्षप्रवेशनिमित्तमभिनन्दनवचांस्युपहरता गताङ्केष्विवास्मिन्नङ्केऽपि लेखानां संक्षिप्तः सारः पूर्णलेखाध्ययनेऽभिरुचिवर्द्धनकामनया समुपन्यस्यते ।

## १. प्रथमो लेखः

अयं लेखो विद्वद्वर्याणां प० श्रीरघुनाथशर्मणां विशिष्टव्याख्यानस्याङ्गभूतः, अस्मिन् 'व्याकरणदर्शने वाक्यविमर्शः' इति शीर्षकेण वाक्यविषयकाः संस्कृतशास्त्रेषु निबद्धाः प्रायः सर्वे विचाराः संकलिताः समालोचिताश्च । तद्विषये व्याकरणस्य सिद्धान्तनिगर्वं प्रकटयद्भिः श्रीशर्मभिर्वाक्यस्य लक्षणं स्वरूपं विभागो वाक्यार्थश्च प्रामाणिकानां व्याकरणग्रन्थानां सम्बद्धैरुद्धरणैरुपन्यस्ताः ।

( १ ) आख्यातशब्दो वाक्यम् ( २ ) पदसंघातः वाक्यम् ( ३ ) पदसङ्घातवर्तिनी जातिर्वाक्यम् ( ४ ) एकोऽनवयवः शब्दो वाक्यम् ( ५ ) क्रमो वाक्यम् ( ६ ) बुद्ध्यनुसंहृतिर्वाक्यम् ( ७ ) आद्यं पदं वाक्यम् ( ८ ) पृथक् सर्वं पदं साकाङ्क्षं वाक्यमिति वाक्यस्याष्टौ पक्षान् सोपपादनं परिष्कृत्य तेषु तृतीयचतुर्थषष्ठान् अखण्डवाक्यस्फोटपक्षेऽन्तर्भाव्य पञ्च सखण्डवाक्यस्फोटपक्षेऽन्तर्भाव्य द्वितीयपञ्चमयोरभिहितान्वयवादानुगुणत्वं प्रथमसप्तमा-

ष्टमानां चान्विताभिधानवादानुगुणत्वं प्रतिपादयद्भिः शर्मभिर्वाक्यार्थविषयका अपि मतभेदाः स्फुटीकृताः। यथाऽखण्डवाक्यपक्ष उक्तानां तृतीयचतुर्थषष्ठानां वाक्यत्वे 'प्रतिभा' वाक्यार्थः, प्रथमस्य वाक्यत्वे 'क्रिया' वाक्यार्थः, द्वितीयपञ्चमयोर्वाक्यत्वे 'संसर्गः' वाक्यार्थः, सप्तमाष्टमयोर्वाक्यत्वेऽन्विताभिधानवादाश्रयणे 'एकपदार्थसंसृष्टापरपदार्थः' वाक्यार्थः, अभिहितान्वयवादाश्रयणे च 'विशेषविश्रान्तः पदानामर्थ एव' वाक्यार्थः। इत्थं वाक्यार्थप्रदर्शनप्रसङ्गे पदार्थः पदाभिधेयः, वाक्यार्थस्तु वाक्यप्रयोजनमित्यपि स्फुटीकृतम्। अस्मिन् सन्दर्भे मण्डनमुरारिमिश्रप्रभृतीनां मते 'विधिः' वाक्यार्थः, गुरुप्रभाकरमते 'नियोगः' वाक्यार्थः, भट्टमते 'भावना' वाक्यार्थ इत्येतदावेद्य शाक्यसम्मतस्य 'वाक्यश्रवणजन्मा कश्चन विज्ञानस्य परस्परसंसृष्टक्रियाकारकादिविषयक आकारविशेषः' इत्येवंविधवाक्यार्थस्य विज्ञानाकारस्याऽखण्डत्वेन प्रतिभासाम्यं प्रदर्श्य प्रतिभासोदरत्वं विज्ञापितम्।

वाक्यवाक्यार्थयोः संसर्गं विमृशता लेखकेन तादृशसंसर्गविषये चत्वारः पक्षाः प्रदर्शिताः। तथा हि वाक्यार्थे वाक्यस्याध्यासरूपः सम्बन्ध इत्येकः पक्षः शाब्दिकानाम्। वाच्यवाचकभावो योग्यताख्यः सम्बन्ध इति द्वितीयः पक्षो मीमांसकानाम्, बौद्धवाक्यार्थे बौद्धस्य वाक्यस्य कार्यकारणभावलक्षणः सम्बन्ध इति तृतीयः पक्षः शाक्यानाम्। संसर्गरूपे वाक्यार्थे वाक्यस्य संकेतलक्षणः सम्बन्ध इति चतुर्थः पक्षोऽपरेषाम्। एषु पक्षेषु प्रथमपक्षे हरेः सम्मतिं ब्रुवता तत्पक्षे स्वस्वारस्यं च प्रकटितं लेखकेन।

तदेवमेकोऽनवयवः शब्दः स्फोटलक्षणं वाक्यम्, प्रतिभैव वाक्यार्थः, अध्यास एव च तयोः सम्बन्ध इति वैयाकरणमतं निष्कृष्टं पर्यवस्यति।

अत्र प्रसङ्गे पदविषये सत्यासत्यत्वपक्षावुपस्थाप्य वाक्यस्याभिन्नस्वभावकतया पदविभागस्य कल्पितत्वात् पदान्यसत्यानीत्येकः पक्षः, वाक्यस्य पदसमूहतया समूहान्तर्गतानि पदानि नित्यानीत्येवं द्वितीयः पक्षश्च विशदं विमृष्टः, स्वसम्मतिश्च 'दध्यानय' इत्यादौ पूर्वपदरूपस्य नाशदर्शनेन पदासत्यत्वपक्षे समुद्भाविता।

वाक्यवाक्यार्थयोरखण्डत्वे पदपदार्थविभागस्य काल्पनिकतया कः पुनः पदार्थ इति प्रश्नं समादधता मतभेदेन द्वादशविधाः पदार्थाः प्रतिपादिताः। तथा हि (१) अपरामृष्टाकारविशेषमर्थसामान्यं सर्वशब्दानां वाच्यम्, गोप्रभृतिपदजन्यप्रत्ययेषु सास्नादिलक्षणाकारभानस्य गवादेराकारविशेषानुभवप्रभवसंस्कारायत्तोपनयवशाज्जायमानत्वात्। (२) जात्यादिस्तदभिव्यक्तौ साहचर्येण प्रयोजक आकारविशेषश्चेत्युभयं शब्दवाच्यम्। (३) गुणप्रधानभावेना-

वस्थिताः सामान्यविशेषात्मकाः साध्यसाधनात्मकाश्चाकाराः शब्दवाच्याः। (४) कार्यमेव सर्वशब्दवाच्यम्। (५) जातिगुणक्रियात्मकस्यार्थस्यासत्यभूतः संसर्ग एव शब्दवाच्यः। (६) असत्यैर्जात्याद्युपाधिभिः सहितः सत्यः पदार्थः शब्दवाच्यः। (७) शब्दस्य स्वरूपमेव शब्दाभिधेयम्। (८) यः शब्दः स्वमाहात्म्याद् यदर्थं बोधयति, सोऽर्थस्तस्य शब्दस्य वाच्यः। (९) योऽर्थः स्वमहिमवशाद् येन शब्देनावबोधितो भवति स तस्य वाच्यः। (१०) बुद्ध्यारूढोऽर्थः शब्दस्य वाच्यः। (११) बौद्ध एवार्थः शब्दवाच्यः। (१२) वासनावशात् प्रतीयमानोऽर्थः शब्दवाच्य इति। इमे सर्व एव पक्षा हरिवचनान्युद्धृत्य समर्थनीयपक्षानुगुणव्याख्यया लेखकेन विशदं दर्शिताः।

वाक्यार्थतया पूर्वमुक्तां प्रतिभामाश्रित्यापि पर्याप्तं विवेचनं कृतमस्ति। तथाहि सर्वव्यवहारनिर्वर्तिका प्राणिनां शक्तिः प्रतिभा। सा द्विधा-प्राक्तनी अधुनातनी च। आद्याऽशिक्षितानां व्यवहारसाधिका, द्वितीया तु शिक्षितानामेव। द्विविधाऽपि प्रतिभा सन्निकर्षविप्रकर्षाभ्यां शब्दायत्ततया शब्दार्थतया शाब्दिकैरुद्घुष्टा स्वभावाभ्यासयोगात्मकहेतुभेदेन त्रिविधा चाभिहिता।

वाक्यादपोद्धृतानां पदानामिव पदादपोद्धृतयोः प्रकृतिप्रत्यययोरर्थाः, निपातोपसर्गकर्मप्रवचनीयानां चार्थाः सम्यग् विवेचिताः।

लौकिकालौकिकभेदाद् द्विविधं शब्दाभिधेयं वदता प्रत्युच्चारणं शब्दानां भिन्नत्वमभिन्नत्वं वेति प्रश्नोऽपि यथोचितमालोचितः।

एवमादयोऽनेके गभीरा विषया लेखेऽस्मिन् सन्निवेशिताः सयुक्ति विवेचिताश्च।

## २. द्वितीयो लेखः

द्वितीयो लेखोऽपि प०श्रीरघुनाथशर्मणो विशिष्टव्याख्यानस्याङ्गभूत एव 'व्याकरणदर्शने पदविमर्शः' इति शीर्षकेण प्रकाशितो वर्तते। अस्मिन् लेख इदं स्पष्टीकृतं यद् व्याकरणदर्शने
पदविमर्शः' इति शीर्षकेण प्रकाशितो वर्तते। अस्मिन् लेख इदं स्पष्टीकृतं यद् व्याकरणदर्शने
वाक्यस्याऽखण्डस्फोटरूपतया, वाक्यार्थस्य चाखण्डप्रतिभारूपतया पदपदार्थयोः पारमार्थिकी सत्ता यद्यपि नास्ति; तथापि व्यवहारानुरोधेन वाक्यत पदानि वाक्यार्थाच्च पदार्थानपोद्धृत्य तयोर्निरूपणं कृत वर्तते। तथा हि कल्पनयोपनीतं पदं विभिन्नैर्विद्वद्भिर्बहुधा वर्णितम्। यथा पदं द्विधा, नामाख्यातभेदात्; पदं चतुर्धा, नामाख्यातोपसर्गनिपातभेदात्। अथवा पदं पञ्चधा, कर्मप्रवचनीयस्यापि संयोजनात्। तल्लक्षणं च सुप्तिङन्तत्वम्, न तु शक्तत्वम् तस्य शब्दसंस्कारे व्याकरणेऽनुपयोगात्।

अपोद्धृतः पदार्थोऽप्यनेकधा वर्णितो विद्वद्भिः । यथा—जातिः पदार्थः, द्रव्यं पदार्थः, तत्तदुपाध्यवच्छिन्नं ब्रह्म पदार्थः। अथवा शब्दार्थनिष्ठे जाती पदार्थः। तत्र शाब्दी जातिः प्रथमं बुध्यते, आर्थी च पश्चात्।

जातिविषये बहूनि मतानि निर्दिष्टानि। यथा नित्योऽनेकसमवेतस्तुल्यत्वादिबाधकानुपपीडितो गोत्वादिको धर्मो जातिः, अनुगताकारप्रत्ययो जातिः तत्तदुपाधिवशाद् यथाप्रयोजनं परिच्छिन्ना ब्रह्मात्मिका महासत्ता जातिरित्यादि।

द्रव्यं द्विधाऽभिहितम्, पारमार्थिकं सांव्यवहारिकं च। प्रथममात्मरूपम्, द्वितीयं च तद्भिन्नतया गुणाश्रयतया चावभासमानं पृथिव्यादिकम्।

शास्त्रप्रक्रियानिर्वाहकं पारिभाषिकं गुणस्वरूपमपि निपुणं निरूपितम्। यथा—

संसर्गि भेदकं यद् यत् सव्यापारं प्रतीयते।
गुणत्वं परतन्त्रत्वात् तस्य शास्त्र उदाहृतम्॥

(वा० प० ३।द्र० स० १)

दिग्विषये तावदिदमुक्तं यद् दिङ् न वैशेषिकवद् द्रव्यम्, किन्तु शक्तिः, कार्यानुमेयत्वे सति पदार्थोपकारकत्वरूपेण शक्तिलक्षणेनाक्रान्तत्वात्।

साधनविषये तावदिदमुक्तं यद् द्रव्याश्रिताः कर्तृकर्मादिशक्तिरूपा गुणा एव साधनम्, न तु तदाश्रयो द्रव्यम्।

क्रियाविषय इदमुक्तं यत् साध्यत्वेनाभिधीयमानानां क्रमजन्मनां गुणभूतावयवानां प्रकल्पिताभेदः समूहः क्रिया। यथा चुल्हिकोपरि स्थाल्या अधिरोहणादारभ्य चुल्हिकातस्तस्या अधोऽवतारणपर्यन्तं प्रवर्तमानानां सर्वव्यापाराणां समूहोऽभिन्नत्वेन कल्प्यमानः पाकक्रियाऽभिधीयते।

कालविषये व्याकरणशास्त्रस्येदं मतं निदिष्टं यत् कालो नाम न वैशेषिकमत इव स्वतन्त्रं द्रव्यम्। अपि तु सर्वकार्यकारणभूता भगवतः शक्तिः, शक्तिशक्तिमतोरभेदाच्च भगवद्रूपः।

पुरुषप्रयोगविषये तावदिदमुक्तं यत् प्रथममध्यमोत्तमभेदात् पुरुषस्त्रिधा। तत्र प्रत्यक्त्वलक्षणचैतन्यम् उत्तमपुरुषप्रयोगे, परत्वे सति चैतन्यं मध्यमपुरुषप्रयोगे, तयोरभावः प्रथमपुरुषप्रयोगे निमित्तम्।

संख्याविषये व्याकरणस्येदं मतमुक्तं यद् भेदाभेदरहितेषु द्रव्येषु यदा भेदाभेदयोर्विधानं सा संख्या। यथा भेद्यो द्रव्यपदार्थ इति लक्षणानुरोधेन सर्वस्य भेद्यस्वरूपस्य द्रव्यपदार्थस्य

लक्षणद्दशा भेदाभेदरहितस्य द्वित्वादिसंख्यया भेदः, एकत्वसंख्यया चाभेदो विधीयते। एवमनेके विषया अस्मिन् लेखे विशदीकृत्य वर्णिताः।

३. तृतीयो लेखः

अयं लेखः 'श्रीसुरेश्वराचार्या आभासवादश्च' इति शीर्षकेण संस्कृतविश्वविद्यालयोपकुलपतिना डा० गौरीनाथशास्त्रिणा लिखितः। अस्मिन् लेखे जीवस्वरूपविषये वेदान्तसिद्धान्ते प्रसिद्धान् अवच्छेद-प्रतिबिम्बाभासवादान् निर्दिश्य प्रतिबिम्बाभासवादौ मिथो भिन्नावभिन्नौ वेति विषयमधिकृत्य विभिन्नानां प्रामाणिकग्रन्थानामुद्धरणाश्रयेण पर्याप्तो विचारः कृतः। ब्रह्मसूत्रभाष्यस्य वचनद्वयमुपन्यस्यावच्छेदप्रतिबिम्बवादयोराचार्यस्य स्पष्टामभिमतिमभिदधता तदीयोपदेशसाहस्रीवचनानुसारेण आभासवादे प्रतिबिम्बवादभिन्नत्वं प्रदर्शितम्। आभासस्यावस्तुत्वे आभासात्मको जीवस्याप्यवस्तुतया तस्य वस्तुभूताद् ब्रह्मणः 'तत्त्वमसि' इत्यादिवाक्यैरभेदप्रतिपादनस्यानौचित्यशङ्का 'नेदमभेदे सामानाधिकरण्यं किन्तु बाधायाम्' इतीदृशयुक्तिबलेन कूटस्थदीपे श्रीविद्यारण्यस्वामिभिः निराकृता। आभासवादो वार्तिककारोपज्ञ इत्युक्तावस्वारस्यं प्रकटयताऽऽभासवादभिन्ने प्रतिबिम्बवादे वार्तिककारस्य स्वीकृतिः प्रतिपादिता।

४. चतुर्थो लेखः

चतुर्थो लेखो निपातार्थनिर्णयः' नाम्ना विश्वविद्यालयस्यानुसन्धानच्छात्रेण श्रीहरिश्चन्द्रमणित्रिपाठिना लिखितः। अस्मिन् लेखे श्रीत्रिपाठिना व्याकरणशास्त्रस्य समग्रं विषयं संक्षेपतः संकलय्य तस्यैव च संस्कृतस्यामरभाषात्वे निदानत्वं भाषाविज्ञानशास्त्रस्याधुनिकस्याधारपीठत्वं च प्रतिष्ठाप्य निपातार्थविषये शास्त्रान्तराणां प्रामुख्येन न्यायशास्त्रस्य विचारमालोचयता व्याकरणशास्त्रस्य दृष्टयः सम्यक् स्पष्टीकृताः।

निपातार्थविषये त्रयः पक्षा उपस्थाप्य विवेचिताः। यथा—निपाता वाचकाः, निपाता द्योतकाः, निपाताः सहकारिणश्चेति। एषु पक्षेषूपसर्गाणां विषये द्योतकत्वपक्षो ज्यायान्। यतो हि धातूनामनेकार्थतया सर्वैर्धातुभिर्विविधो विरुद्धोऽविरुद्धश्चार्थो बोधयितुं शक्यते समासाद्य तत्तदर्थद्योतनसमर्थशब्दसन्निधानम्। अतः प्रसिद्ध्या गतिनिवृत्तिबोधकस्यापि स्थाधातोर्वस्तुतो गतेरपि वाचकतया द्योतकस्य 'प्र' शब्दस्योपसर्गलक्षणस्य सन्निधाने गतिबोधकत्वे न किंचिद् बाधकम्।

'च' प्रभृतीनामुपसर्गातिरिक्तनिपातानां विषयेऽपि द्योतकत्वपक्ष एव गरीयान्, केवलानां तेषां क्वाप्यर्थाबोधकत्वात्। मतमिद भर्तृहरिनागेशप्रभृतीनां बहूनां वैयाकरणानां सम्मतम्। भट्टो-

जिदीक्षितप्रभृतयो वैयम्ये मानाभावेन सर्वेषां निपातानां वाचकत्वं द्योतकत्वं चेत्युभयं मन्यन्ते। महाभाष्यकार उपसर्गातिरिक्तनिपातानां तदुभयम्, उपसर्गाणां च द्योतकत्वमात्रं प्रतिपेदे। कैयटोऽप्यत्रैव स्वाभिप्रायं प्रकाशयामास।

धातुसाधनयो· कतरेण प्रथमं योग उपसर्गस्येति प्रश्नविषयेऽपि प्रसङ्गेन पर्याप्तं विचारं विधाय पूर्वं धातुरुपसर्गेण युज्यते, पश्चात् साधनेनेति निर्णयायानुगुणा युक्तय उपन्यस्ताः।

इत्थमनेके मननीया विषया निपातार्थनिरूपणसन्दर्भे लेखकेन प्रमाणोद्धरणपूर्वकं विवेचिताः।

## ५. पञ्चमो लेखः—

एष लेखो विश्वविद्यालयस्यानुसन्धात्रा श्रीजगन्नारायणपाण्डेयेन 'आलङ्कारिकभामहस्य दोषविषये किञ्चित्' इति शीर्षकेण लिखितः।

लेखेऽस्मिन् अलङ्कारसर्वस्वटीकायां समुद्रबन्धस्य 'विशिष्टौ शब्दार्थौ काव्यम्' इति वचनाश्रयेण धर्म-व्यापार-व्यङ्ग्यमुखानि त्रिविधवैशिष्ट्यान्युपजीव्य गुणालङ्कारलक्षणौ धर्मभेदौ वक्रोक्तिभावकत्वस्वरूपौ व्यापारभेदौ चाश्रित्यालङ्कारिकाणां पञ्चसमयानुपन्यस्यता तत्तत्समय-सम्बद्धानामालङ्कारिकाणां नाम निर्दिशता चाचार्यभामहस्य दोषविषयिणी दृष्टिः संक्षेपेण किन्तु वैशद्येन स्पष्टीकृता।

भामहकृतस्य काव्यालङ्कारस्य परिचयं चित्रयता तत्र तद्विहितां दोषचर्चां चारु पर्यालो-चयता च 'सामान्यदोषाः' इतिशीर्षकेण नेयार्थ-क्लिष्टार्थप्रभृतीन् षड् दोषानुदाहरणैः स्फुटीकृत्य तेषां दूषकताबीजं विवेचितम्।

'वाणीदोषाः' इति शीर्षकेण श्रुतिदुष्टार्थदुष्टप्रभृतीन् चतुरो वाग्दोषान् निरूपयतोपसंहारे 'दोषपरिहारः' इति शीर्षकेण भामहदर्शितास्तत्तद्दोषपरिहारप्रकारा अपि पण्डितजनाह्लाद-कारिण्या सरण्या समुपवर्णिताः।

## ६. षष्ठो लेखः—

अयं लेख आलोचकेषु प्रख्यातप्रतिभेन डा० इन्द्रचन्द्रशास्त्रिणा धर्म और उसकी व्याख्यायें—धर्मस्तदीया व्याख्याश्च' इति शीर्षकेण लिखितः। अत्र लेखे धारणकर्मणा धर्मं लक्षयित्वा तदीयव्याख्याः पुस्तकमूलक-व्यक्तिमूलक-दृष्टिमूलक-लक्ष्यमूलकनाम्नीषु चतुःश्रेणिषु विभजमानेन लेखकेन वेदादीन् ऋषिप्रभृतींश्चोपजीव्य कृताया धर्मव्याख्यायाः प्रथमश्रेण्याम्, व्यक्तीनां सदाचारमयजीवनस्य महिम्नश्चाश्रयेण प्रकृताया धर्मव्याख्याया द्वितीयश्रेण्याम्, दृष्टेर-

भेद-शून्यता-समतामूलकान् भेदान् परिगणयता तदाधारेण कृताया धर्मव्याख्यायास्तृतीय-श्रेण्याम्, सामाजिकसुव्यवस्था-लौकिकपारलौकिकोपलब्धि-पुरुषार्थचतुष्टयसम्पत्तिप्रभृतिलक्ष्यानुगुण्येन विहिताया धर्मव्याख्यायाश्चतुर्थश्रेण्यां समावेशो वर्णितो विद्यते ।

उपसंहारे 'सर्वग्राहिव्याख्या' शीर्षकेण मनुस्मृतेर्धर्मव्याख्यापद्धतिं प्रशंसता लेखकेन धर्मविचारक्रमस्य चरमा परिणतिर्निर्णिताऽस्ति ।

इतः परं पञ्चविंशवर्षे करिष्यमाणप्रवेशायाः सारस्वती-सुषमाया अङ्केषु पूज्यपादस्वामिकरपात्रमहाराजानां गुर्जरराज्यस्य सुप्रसिद्धपण्डितानां श्रीबदरीनाथशास्त्रिमहोदयानां च विशिष्टव्याख्यानकतिपयै रम्यलेखैः सह प्रकाश्य विद्वज्जनानां चेतस्तृप्तिसम्पादनं कर्तुं काम्यत इति सादरं विज्ञाप्यन्ते सहृदयाः 'सुषमा' रसिकाः ।



# सारस्वती सुषमा

## वाराणसेयसंस्कृतविश्वविद्यालयपत्रिका

२४ वर्षः } फाल्गुनपूर्णिमा, संवत् २०२६ { ४ अङ्कः

# व्याकरणदर्शने वाक्यविमर्शः

श्रीरघुनाथशर्मा, वेदान्तविभागाध्यक्षचरः, वा० सं० वि० वि०, वाराणसी ।

[ २४ वर्षे ३ अङ्कादनुवृत्तः ]

परामृश्य परामम्बामखण्डां वाक्यरूपिणीम् ।
वाकोवाकैः परिणुतामथ वाक्यं विमृश्यते ॥

यद्यपि व्याकरणदर्शने शब्दस्य वाचकत्वं पदवाक्यसाधारण्येन व्यवस्थापितम्, तथापि केषाञ्चित् पदं वाचकमन्येषां वाक्यमिति मतभेदस्य सत्त्वात् सिद्धान्ते वाचकात्मनो वाक्यस्वरूपस्य समासव्यासाभ्यां प्रतिपादनाय ममायमायासः । तत्राचार्याणां मतभेदसमाश्रयेण तावदष्टौ पक्षभेदा वाक्यविषये निर्दिष्टा वाक्यपदीये । १- आख्यातशब्दो वाक्यम् । २- पदसङ्घातः । ३- पदसङ्घातवर्तिनी जातिः । ४- एकोऽनवयवः शब्दः । ५- क्रमः । ६- बुद्ध्यनुसंहृतिः । ७- आद्यं पदम् । ८- पृथक् सर्वं पदं साकाङ्क्षमिति ।

तत्राख्यातशब्दो वाक्यमिति वादिनामाख्यातशब्द एव वाक्यमिति नाभिप्रायः, 'देवदत्त गामभ्याज दण्डेन' इत्यादौ वाक्यत्वव्यवहारस्यानपलप्यत्वात् । किन्तु क्वचित् केवलाख्यातशब्दोऽपि वाक्यम् । यथा 'पिधेहि' इति । तदुक्तं हरिणा—

आख्यातशब्दे नियतं साधनं यत्र गम्यते ।
तदप्येकं समाप्तार्थं वाक्यमित्यभिधीयते ॥ इति ।

(वा० प० २।३२६)

पदसङ्घातो वाक्यमिति वादिनस्तु पिधेहीत्यादौ न केवलाख्यातस्य वाक्यत्वम्, किन्तु द्वारमिति कर्माध्याहृत्य तत्संहृतस्यैवेति। केवलस्य द्वारमिति सुबन्तस्य केवलाख्यातशब्दवद् वाक्यत्वं तु न, तत्र नियमेन पिधानक्रियाया अनुपस्थितेः।

सुप्तिङन्तपदसङ्घातवर्तिनी जातिर्वाक्यमिति वादिनामभिसन्धिस्तु 'देवदत्त गामभ्याज दण्डेन' इत्यादिपदसङ्घातरूपवाक्येष्वस्ति कश्चन प्रतिवाक्यं विद्यमानो जातिविशेषो येन प्रतिपुरुषं प्रत्युच्चारणं प्रतिक्षणं भिद्यमाने 'देवदत्त गामभ्याज दण्डेन' इति वाक्ये एकत्वप्रत्यभिज्ञा भवति। तत्र प्रतिपुरुषं प्रत्युच्चारणं प्रतिक्षणञ्च भिद्यमाने पदसङ्घाते वाचकत्वं न सम्भवति, शक्तेरानन्त्यव्यभिचारदोषप्रसङ्गात्। अतः पदसङ्घातगताया जातेरेकस्या एव वाचकत्वमिति तस्या एव वाचकत्वमिति।

एकोऽनवयवः शब्दो वाक्यमिति केषाञ्चिन्मतम्। एतन्मते वाक्यस्फोटोऽखण्डः, तत्र वर्णपदापोद्धारकल्पनायामपि वस्तुतो वर्णाः पदानि वा तत्र न सन्तीति।

पदानां क्रमः पौर्वापर्यम्, पूर्वापरीभूतानि पदान्येव वाक्यमित्यपरे। एतन्मते वाक्यस्फोटस्य सखण्डत्वं पदसमुदायारब्धत्वञ्चेति।

बुद्ध्यनुसंहृतिर्वाक्यमित्यन्ये। एतस्मिन् कल्पे वाक्यमखण्डम्। तत्र पदानि न सन्ति। किन्तु पदानि पदबुद्धयश्च कल्पितानि। तत्र पदबुद्धीनां कल्पितानामनु-क्रमेण-संहार-उपसंहार इति वाक्यस्य पदसमुदायरूपत्वं बुद्ध्या प्रकल्प्य वाक्यत्वव्यवहारः।

पदसमुदाये आद्यं पदं वाक्यमित्यपि केषाञ्चिन्मतम्। अस्मिन् पक्षेऽनेकपदारब्धं सखण्डं वाक्यम्। अस्मिन् मते प्रथमोपस्थितत्वात् शक्ततावच्छेदकानुपूर्वीकल्पनायां लाघवाच्चाद्यं पदमेव वाचकम्, इतरपदानि तु तत्सहकारीणि तच्छक्तिद्योतकानि। यथा 'साक्षात् क्रियते' इत्यत्र साक्षात्पदमेव साक्षात्कारवाचकम्, क्रियत इति तु पूर्वपदस्य तदर्थे शक्तिद्योतकमित्याद्यपदस्यैव वाक्यत्वमिति।

पृथक् सर्वं पदं साकाङ्क्षं वाक्यमिति वादिनामयं भावः—पृथक्-वाक्यात् पृथक्कारे, साकाङ्क्षम्-पदान्तरसाकाङ्क्षम्, सर्वम्-आद्यं मध्यमन्त्यञ्च पदं समुदितं वाक्यमिति। तदुक्तं जैमिनिमुनिना—अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद् विभागे स्यादिति ( मी० द० अ० २ पा० १ सू० ४६ )।

एष्वष्टसु वाक्यविकल्पेषु--जातिः सङ्घातवर्तिनी, एकोऽनवयवः शब्दः, बुद्ध्यनुसंहृतिरिति त्रीणि वाक्यलक्षणानि वाक्यस्फोटोऽखण्ड इति पक्षे। आख्यातशब्दः, पदसंघातः, क्रमः,

पदमाद्यम्, पृथक् सर्वं पदं साकाङ्क्षमिति पञ्च लक्षणानि वाक्यस्फोटः सखण्ड इति पक्षे। तत्रापि पदसंघातः, क्रम इति लक्षणद्वयमभिहितान्वयवादे। तथाहि—अभिहितयोः शक्त्योपस्थापितयोः पदार्थयोरन्वय आकाङ्क्षाभास्य इति ये वदन्ति तेऽभिहितान्वयवादिनः। तथा च पदानां सङ्घातो वाक्यम्, पदानां पौर्वापर्यरूपः क्रमो वा वाक्यमिति पक्षेऽभिहितान्वयवाद आपतति; पदानामेव शक्तत्वात्, पदसङ्घातरूपे वाक्ये शक्त्यनभ्युपगमात्। एष चाभिहितान्वयवादो नैयायिकानाम्। आख्यातशब्दः, पदमाद्यम्, पृथक् सर्वं पदं साकाङ्क्षमिति लक्षणत्रयं त्वन्विताभिधानवादे बोध्यम्। तथाहि—कार्यान्विते इतरपदार्थान्विते वा स्वार्थे पदानां शक्तिरित्यन्वयरूपः संसर्गोऽपि शक्तिभास्य एव। तत्रान्वयत्वेनान्वयसामान्यं शक्तिभास्यम्, तादात्म्यादिरूपः सम्बन्धविशेषस्तु वाक्यलक्षणया लभ्यत इत्यन्विताभिधानवादिनो मीमांसकाः। तदुक्तम् —

सर्वत्रैव हि वाक्यार्थो लक्ष्य एवेति ये विदुः।
भाट्टास्तेऽपीत्थमेवाहुर्लक्षणाया ग्रहे गतिम्॥ इति।

वाक्यस्फोटश्च प्रकारान्तरेण द्विविधः। बाह्य आभ्यन्तरश्चेति। तत्राद्यः परश्रवणगोचरः। आभ्यन्तरस्तु मनोमात्रगोचरः। बाह्योऽपि जातिव्यक्तिभेदेन द्विविधः। तत्र जातिलक्षणस्य स्फोटस्य जातिः सङ्घातवर्तिनीति निर्देशः। व्यक्तिलक्षणस्य त्वेकोऽनवयवः शब्द इति। आभ्यन्तरस्य तु बुद्ध्यनुसंहृतिरिति दिङ्निर्देशो विस्तरस्तु वाक्यपदीयटीकायां मदीयायाम्। एभ्यो वाक्यलक्षणविकल्पेभ्योऽन्यदपि वार्तिककारीयं पारिभाषिकं शास्त्रमात्रोपयोगिवाक्यलक्षणमस्ति। आख्यातं साव्ययकारकविशेषणं वाक्यमिति।

अस्यार्थः—अव्ययेन कारकैर्विशेषणेन च सहितमाख्यातं = तिङन्तं वाक्यमिति। यथा मृदु प्रपचति स्थाल्यां तण्डुलमिति। अत्र प्रेत्यव्ययम्। स्थाल्यां तण्डुलमिति कारकद्वयम्। मृद्वित्याख्यातस्य विशेषणम्। एतच्च साव्ययकारकविशेषणत्वं यथासम्भवं बोध्यम्, न तु नियतम्। एकतिङ् वाक्यमित्यपि वार्तिककारीयं शास्त्रमात्रोपयोगि पारिभाषिकं लक्षणमस्ति। एकं तिङन्तं मुख्यार्थप्रतिपादकं यत्र, तद् वाक्यमिति तदर्थः। तेन पचति भवति, पश्य मृगो धावति, इत्यादीनां तिङन्तद्वयघटितानामपि वाक्यत्वमुपपन्नं भवति। लौकिकमपि वाक्यलक्षणं जरन्मीमांसकोक्तमस्ति—'अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद् विभागे स्यात् इति'।

अस्यार्थः—यत्पदकदम्बकं परस्परान्वितपदार्थकं तदर्थैकत्वादेकं वाक्यम्, किन्तु तद्घटकपदानां विभागे = ततः पृथक्कारे, तत्पदकदम्बकं साकाङ्क्षं = पृथक्कृतपदार्थविषये साकाङ्क्षं यदि स्यादिति। अनयोर्द्विविधयोरपि वाक्यलक्षणयोः शास्त्रीयलौकिकयोः 'पदसङ्घातो

वाक्यम्' इति लक्षणेऽन्तर्भावः । एते च वाक्यविकल्पाः सुविशदं वाक्यपदीये द्वितीयकाण्डे तट्टीकायाञ्च मदीयायां, स्याद्वादरत्नाकरे च व्याख्यातेत्यधिकं जिज्ञासुभिस्तत्र द्रष्टव्याः । वाक्यलक्षणनिरूपणप्रसङ्गेन च वाक्यार्थविषया मतभेदाः प्रदर्शिता हरिणा वाक्यपदीये द्वितीयकाण्डे । तत्राखण्डवाक्यपक्षे जातिः संघातवर्तिनी, एकोऽनवयवः शब्दः, बुद्ध्यनुसंहृतिरिति त्रिष्वपि वाक्यलक्षणेषु प्रतिभा वाक्यार्थः । प्रतिभास्वरूपञ्च दर्शितं हरिणा—

विच्छेदग्रहणेऽर्थानां प्रतिभाऽन्यैव जायते ।
वाक्यार्थ इति तामाहुः पदार्थैरुपपादिताम् ॥ इति ॥
( वा. प. २।१४३ )

आख्यातशब्दो वाक्यमित्यस्मिन् पक्षे क्रिया वाक्यार्थः । तदुक्तं हरिणा—

क्रिया क्रियान्तराद् भिन्ना नियताधारसाधना ।
प्रक्रान्ता प्रतिपत्तॄणां भेदाः संबोधहेतवः ॥ इति ॥
( वा. प. २ । ४१४ )

प्रतिभा यत्प्रभूतार्था यामनुष्ठानमाश्रितम् ।
फलं प्रसूयेत यतः सा क्रिया वाक्यगोचरः ॥ इति च ॥

पदसङ्घातो वाक्यमिति, पदानां पौर्वापर्यरूपः क्रमो वाक्यमिति च पक्षद्वये पदार्थानां संसर्गो वाक्यार्थः । स च दर्शितो हरिणा—

संबन्धे सति यत्त्वन्यदाधिक्यमुपजायते ।
वाक्यार्थमेव तं प्राहुरनेकपदसंश्रयम् ॥ इति ॥
( वा. प. २ । ४२ )

अत्र संबन्धे सतीत्यस्य पदानां परस्परसंबन्धे सतीत्यर्थः । किञ्च पदसंघातो वाक्यमिति पक्ष एव—

सर्वभेदानुगुण्यं तु सामान्यमपरे विदुः ।
तदर्थान्तरसंसर्गाद् भजते भेदरूपताम् ॥ इत्यपि ।
( वा. प. २।४४ )

अस्यार्थः—फलितस्तु पदात् सामान्येन प्रतीयमानः पदार्थ एव पदान्तरसंबन्धे सति तदुपस्थाप्यपदार्थान्तरसंसर्गितया प्रतीयमानो विशेषरूपतामापन्नो वाक्यार्थः । पदार्थयोः

संसर्गो वाक्यार्थ इति यावत् । अत्र च प्रकारान्तरेणाभिहितान्वयवाद एव प्रतिपाद्यते । तदुक्तं हरिणा—

अभिधेयः पदस्यार्थो वाक्यस्यार्थः प्रयोजनम् इति ।

( वा. प. २ । ११३ )

अत्र चाभिहितान्वयवादिसयूथ्यस्यैव कस्यचिन् मतविशेषो दर्शितो हरिणा—

कार्यानुमेयः संबन्धो रूपं तस्य न दृश्यते ।
असत्त्वभूतमत्यन्तमतस्तं प्रतिजानते ॥ इति ॥

( वा. प. २ । ४६ )

तदेवमनेन श्लोकेन पदानामेवार्थो यः सर्वपदार्थान्वययोग्यः सामान्यरूपः स एव पदार्थान्तर सन्निधानाद् विशेषविश्रान्तो वाक्यार्थ इति लभ्यते । अस्मिंश्चाभिहितान्वयवादस्यैव मतविशेषे वाक्यार्थत्वेनाभिमतस्य संबन्धस्य प्रागुक्तरीत्या कार्येण विशेषविश्रान्तिलक्षणेनानुमेयत्वमेव, नत्वाकाङ्क्षाभास्यत्वमित्यनेन श्लोकेन विज्ञायते । अन्विताभिधानमाश्रित्य तु पदमाद्यमिति, पृथक् सर्वं पदं साकाङ्क्षमिति चास्मिन् पक्षद्वये पदस्यैकस्य पदान्तरसंसर्गात्, एकस्य पदार्थस्य पदार्थान्तरसंसर्गाद्वा प्रथमतरमेवैकपदार्थसंसृष्टापरपदार्थरूप एव वाक्यार्थः प्रतिपत्तृबुद्ध्यारूढो भवति । तदुक्तं हरिणा—

तेषां तु कृत्स्नो वाक्यार्थः प्रतिभेदं समाप्यते ।
व्यक्तोपव्यञ्जना सिद्धिरर्थस्य प्रतिपत्तृषु ॥ इति ॥

( वा. प. २ । १८ )

पूर्वैरर्थैरनुगतो यथाऽर्थात्मा परः परः ।
संसर्ग एव प्रक्रान्तस्तथाऽन्येष्वर्थवस्तुषु ॥ इति च ।

( वा. प. २ । ४१२ )

अनयोर्व्याख्यानं तु मदीयवाक्यपदीयटीकातोऽवगन्तव्यं विस्तरभयादत्रोपेक्षितम् । तदेवमभिहितान्वयवादे "कार्यानुमेयः संबन्धः" इति ( वा. प. २ । ४६ ) श्लोकेन विशेषविश्रान्तः पदानामर्थ एव वाक्यार्थ इति लभ्यते ।

अन्विताभिधानवादे तु पदमाद्यमिति, पृथक् सर्वं पदं साकाङ्क्षमिति च पक्षद्वये प्रथमतरमेव संसृष्टो वाक्यार्थोऽव्यक्तं प्रतीयते, पदान्तरसन्निधानकाले तु व्यज्यमानो व्यक्तं प्रतीयत इति निर्धारितम् । केषाञ्चित्तु मते वाक्यार्थो नाकाङ्क्षाभास्यः कार्यानुमेयो वाऽभिहितान्वयवा-

दिनामिव, नाप्यन्विताभिधानवादिनामिव शक्तिभास्यः, किन्तु पदार्थः पदाभिधेयः, वाक्यार्थस्तु वाक्यस्य प्रयोजनमिति । तदेतदुक्तं हरिणा—

अभिधेयः पदस्यार्थो वाक्यस्यार्थः प्रयोजनम् इति ।

( वा. प. २ । ११३ )

एतदर्थं वाक्ये व्यञ्जनावृत्तिस्तु तैर्न स्वीक्रियते, व्यञ्जनाया अनुमानेन गतार्थत्वात् । तदेतत् प्रपञ्चितं व्यक्तिविवेके महिमभट्टैरिति नेह प्रतन्यते। तदेतन्मतं दूषितमस्यैव पद्यस्योत्तरार्धेन हरिणा--

यस्य तस्य न संबन्धो वाक्यानामुपपद्यते । इति ।

( वा. प. २ । ११३ )

अयं भावः—यस्य वादिनो वाक्यप्रयोजनं वाक्यार्थो न वाक्याभिधेय इति, तस्य वादिनो मते वाक्यानां परस्परं संबन्धो महावाक्येषु दृश्यमानो नोपपद्यते । अभिधेयद्वारको हि शब्दानां संबन्धो भवति । अभिधेयञ्च वाक्यानां नास्तीत्यसंबन्धानि वाक्यानि प्राप्नुवन्तीति । तदेतद् वाक्यप्रयोजनं वाक्यार्थ इति केषाञ्चिन्मतम् । सर्वेषु वाक्यलक्षणेषु सत्सु संभवतीति वाक्यलक्षणेषु पृथग् विभज्यमानेषु न पृथग् विभज्यते । अस्मिन् वाक्यलक्षणे वाक्यार्थो वाक्यप्रयोजनमिति ।

तदेवं षड्वाक्यार्था द्वितीयकाण्डे हरिणोपदर्शिताः । १. प्रतिभा। २. पदार्थानां संसर्गः। ३. पदार्थान्तरसंसर्गात् पूर्वं सामान्यरूपः पदार्थान्तरसाकाङ्क्षः, पश्चात्तु पदार्थान्तरसंसर्गवशान्निराकाङ्क्षे विशेषरूपेऽवस्थितः पदार्थान्तरसंसर्गोपलक्षितः पदार्थ एव वाक्यार्थः । ४. पदार्थान्तरसंसर्गविशिष्टः पदार्थ एव वाक्यार्थः । ५. क्रियावाक्यार्थ इति पञ्चमः पक्षः । ६. वाक्यस्य प्रयोजनं वाक्यार्थ इति षष्ठः पक्षः ।

तत्र संसर्गे संसर्गवशाद् विशेषावस्थिते पदार्थे च वाक्यार्थे स्वीक्रियमाणेऽभिहितान्वयवाद एवापतति । उभयत्रापि पक्षे संसर्गभानस्य पदसमभिव्याहारविशेषरूपाकाङ्क्षाप्रयोज्यत्वात्, पदार्थान्तरसंसृष्टः पदार्थो वाक्यार्थ इति तत्तद्विशेषणविशिष्टसाधनान्विता क्रियैव वाक्यार्थ इति पक्षे चान्विताभिधानवादः स्पष्ट एव । पक्षद्वयेऽप्यन्वयस्य पदशक्त्या प्रतीयमानत्वात् । प्रतिभायां त्वखण्डस्य वाक्यार्थस्य विषयत्वात् पदार्थान्वयशून्या एकरसैव प्रतिपत्तिरिति न तत्र काचिदभिहितान्वयान्विताभिधानचर्चा । प्रयोजने तु वाक्यार्थे स्वीक्रियमाणेऽभिहितान्वयवाद एव, तत्र प्रतीयमानस्य पदार्थद्वयसंसर्गरूपस्य प्रयोजनस्याकाङ्क्षामात्रलभ्यत्वादित्यवधेयम् ।

यद्यपि विधिर्वाक्यार्थं इति, नियोगो वाक्यार्थं इति, भावना वाक्यार्थं इति पक्षत्रितयमपि शास्त्रेषु दृश्यते । तथाहि—इष्टसाधनत्वाख्यो विधिर्लिङ्लेट्लोट्तव्याद्यन्तधातुप्रयोगे प्रतीयमानो लिङाद्यर्थोऽपि तत्तत्साधनान्वितक्रियान्वितो वाक्यात् प्रतीयमानो वाक्यार्थं इति मण्डनमुरारिमिश्रप्रभृतयः । नियोगो लिङाद्यर्थः, स च कार्यापूर्वविधिपदैरप्यभिधीयते । तल्लक्षणं तु—कृतिसाध्यं प्रधानं यत्, तत्कार्यमभिधीयत इति । स च कार्यरूपो नियोगो लोके क्रियारूप एव । वेदे तु 'स्वर्गकामो यजेत' इत्यादौ यागादिक्रियातिरिक्तो यागादिक्रियाविषयको यागादिक्रियाकरणकस्तत्तत्फलकामनियोज्यकश्च । तदुक्तम्—

कृतितत्साध्यमध्यस्थो यागादिर्विषयो मतः ।
कार्येऽसंघटिताकारे विषयत्वेन सम्मतः ।। इति

इदञ्च प्रभाकरमतं गुरुमतमित्यपि शास्त्रेष्वाख्यायते ।

भावना वाक्यार्थं इति तु भट्टमतम् । सा च द्विविधा—शाब्दी आर्थी च । तत्र लोके प्रयोक्तुरभिप्रायविशेषो लिङाद्यर्थः । वेदे शाब्दी भावना लिङादिशब्दनिष्ठा । आर्थी भावना तु पुरुषप्रवृत्तिरूपा वेदप्रयोज्याधिकारिपुरुषनिष्ठा । तदेवं विधिनियोगभावनासंज्ञास्तु वाक्यार्था मतभेदेनाभिप्रेता अप्यत्र न निरूपिताः । यस्माद् भावनाक्रिययोः पर्यायता प्रायशो लक्ष्यते । क्रियावाक्यार्थं इति तु निरूपितमेवात्रेति तेन गतार्थत्वात् । केवलं भावना प्रकृत्यर्थं इति वैयाकरणाः । प्रत्ययार्थं इति तु मीमांसका इति विप्रतिपत्तिविषयो विशेषः । विधिनियोगौ तु लिङ्लोट्कृत्यान्तेष्वेव वाक्येष्वर्थाविति सर्ववाक्याविषयत्वाद् वाक्यपदीय उपेक्षितौ । किञ्च विधिः प्रेरणमिति पक्षे विधिः क्रियैव । नियोगस्तु प्रभाकरकपोलमात्रकल्पित इत्यतो भट्टादिभिरनादृतत्वाच्चोपेक्षितः । शाक्यानान्तु वाक्यश्रवणजन्मा कश्चन विज्ञानस्य परस्परसंसृष्टक्रियाकारकादिविषयक आकारविशेषो वाक्यार्थः । स चान्तरोऽपि बहीरूपतयाऽध्यस्तः, निर्विभागोऽपि बहीरूपतयाऽध्यस्तैः पदार्थैः सविभाग इव लक्ष्यते । स च प्रायशः प्रतिभासोदर एव मन्तव्यः, प्रतिभाया विज्ञानाकारस्य तादृशवाक्यार्थस्य चाखण्डत्वसाम्यात् ।

अयं तु विशेषः—प्रतिभाया गोचरो वाक्यार्थो बहिरस्ति वस्तुभूतः विज्ञानाकारविशेषस्तु वाक्यार्थो नास्ति बहिर्वस्तुभूत इति । अत एव प्रतिभासोदरत्वमस्योक्तं हरिणा, न तु प्रतिभात्वमेवेति । तथा चैतस्य शाक्यपक्षस्य प्रतिभा वाक्यार्थं इति पक्ष एव यथा कथञ्चिदन्तर्भावोऽवान्तरभेदसत्त्वेऽपीति । किञ्च विज्ञानवादिमते—आन्तरोऽपि बहीरूपतयाऽध्यस्तो

विज्ञानाकारविशेष एव वाक्यम्। तस्य च प्रायशो बुद्ध्यनुसंहृतिर्वाक्यमित्यत्रान्तर्भावः। भेदस्तु विज्ञानवादिनां विज्ञानाकारविशेषो वाक्यम्। बुद्ध्यनुसंहृतिर्वाक्यमिति वादिनां त्वेकस्यां बुद्धावनुसंहृतानि क्रमवन्ति पदान्येव वाक्यमिति। तथा च शाक्याभिमतस्य वाक्यार्थस्य प्रतिभायां तदभिमतस्य वाक्यस्य च बुद्ध्यनुसंहृतावन्तर्भावेण न तदभिमतयोस्तयोरसंग्रहोऽत्रेति।

नैयायिकादीनां तु मते पूर्वपूर्वे ये वर्णास्तद्विषया समूहालम्बनात्मिकोत्पद्यमानावस्था एका या स्मृतिस्तत्सहकृतो योऽन्त्यो वर्णो विनश्यदवस्थेन श्रावणप्रत्यक्षरूपेणानुभवेन गोचरीक्रियमाणः स एव पदं यथा, तथा पूर्वपूर्वाणि यानि पदानि तेषां यैका समूहालम्बनात्मिकोत्पद्यमानावस्थास्मृतिस्तत्सहकृतमन्त्यमेव पदं विनश्यदवस्थेन श्रावणप्रत्यक्षरूपेणानुभवेन गोचरीक्रियमाणं वाक्यमिति। इदं प्रायशः पदसङ्घातो वाक्यमिति पक्ष एवान्तर्भवति। वर्णानां पदानाञ्चोच्चरितप्रध्वंसिनां युगपदवस्थानाभावेन वस्तुभूतबाह्यसङ्घाताऽसंभवेऽपि पूर्वोक्तरीत्या स्मृत्यनुभवरूपाभ्यां बुद्धिभ्यां युगपदुल्लेखाद् यौगपद्योपपत्त्या बौद्धसङ्घातसम्भवात्। विभुविशेषगुणद्वयस्य च युगपदवस्थितिर्विरुद्धेत्युत्पद्यमानावस्थया स्मृत्या सह विनश्यदवस्थस्यानुभवस्य न विरोधः। एवं पूर्वपूर्वपदानां येऽर्थास्तद्विषयकं यदेकं स्मरणं समूहालम्बनात्मकं तत्सहकृतेनान्त्येन पदेनोत्पाद्यमाना या परस्परसंसृष्टसर्वपदार्थविषया प्रतीतिः सैव वाक्यार्थविषयकत्वाद् वाक्यार्थ इति। इदमपि मतं प्रायशः संसर्गपक्ष एवान्तर्भवति, परस्परसंसृष्टपूर्वपूर्वपदार्थसंसृष्टस्य चरमपदार्थस्यैव वाक्यार्थत्वे पदार्थानां पदशक्यत्वेन संसर्गस्यैवान्ततो वाक्यार्थत्वात्। एवञ्च न नैयायिकसम्मतवाक्यार्थासंग्रहेणात्र वाक्यवाक्यार्थलक्षणानामव्याप्तिर्वक्तव्येति। अत्र पूर्वोक्तेष्वष्टसु वाक्येष्वनवयव एकस्मिन् स्फोटात्मके वाक्ये षट्सु च वाक्यार्थेषु प्रतिभारूपे वाक्यार्थे वैयाकरणानां सम्मते वाक्यवाक्यार्थयोरध्यासरूपः संबन्धः। अत्र अध्यस्यत इत्यध्यास इति कर्मणि घञन्तेनाध्यस्यमानं वाक्यवाक्यार्थयोस्तादात्म्यमेव संबन्ध इति ज्ञेयम्। तदुक्तं हरिणा—

वाक्यरूपस्य वाक्यार्थे वृत्तिरन्यानपेक्षया। इति

(वा. प. २।२६२)

अयमर्थः—वाक्यरूपस्यैकोऽनवयवः शब्द इत्येवं लक्षणलक्षितस्य वाक्यार्थे वृत्तिः। वाक्यार्थे बोधनीये प्रवृत्तिः, वाक्यार्थबोधनाय प्रवृत्तिरिति यावत्। अन्यानपेक्षया अन्यद् वाक्यरूपातिरिक्तं प्रवृत्तिनिमित्तं तदनपेक्षया वाक्यस्वरूपमात्रप्रवृत्तिनिमित्तापेक्षयेति यावत्। तथा च

वाक्यार्थे यदि वाक्यस्वरूपस्य तादात्म्याध्यासो न स्यात् तदा वाक्यस्वरूपस्य वाक्यार्थधर्मत्वाभावाद् वाक्यस्वरूपं वाक्यस्य वाक्यार्थबोधनाय प्रवृत्तौ निमित्तं न स्यात् ।

घटपदस्य घटबोधाय प्रवृत्तौ हि घटधर्मो घटत्वं प्रवृत्तिनिमित्तं भवतीति । एकोऽनवयवः शब्द इति पक्षातिरिक्तेषु सप्तसु पक्षेषु वाच्यवाचकभावलक्षणो योग्यताख्य एव संबन्धो मीमांसकदृष्ट्या । वाक्ये हि वाचकत्वयोग्यता वाचकतावच्छेदकानुपूर्वीविशेषरूपधर्मविशेषरूपा । वाक्यार्थे च वाच्यत्वयोग्यता वाच्यतावच्छेदकतत्तद्धर्मविशेषरूपा । वाक्याद् वाक्यार्थबोधदर्शनेन तयोर्वाच्यवाचकभावरूपः संबन्धः कल्प्यते, असंबद्धस्य बोध्यत्वे बोधकत्वे चातिप्रसङ्गात् । वाच्यवाचकभावसंबन्धेन च तयोर्वाच्यत्वयोग्यता वाचकत्वयोग्यता च कल्प्यते । सा च तयोः स्वरूपं धर्मविशेषो वा भवतीत्यन्यदेतत् । शाक्यदर्शनानुसारेण तु विज्ञानवादनयेन बौद्धे पदार्थे वाक्यार्थे वा बौद्धस्य पदस्य वाक्यस्य वा कार्यकारणभाव एव संबन्धः । विज्ञानाकारविशेषस्य पदस्य वाक्यस्य वा विज्ञानाकारविशेषे पदार्थे वाक्यार्थे वा तत्तद्विषयकज्ञाने च कारणत्वाद् विशेष्यविशेषणभावादिरूपः संबन्धो वाक्यशक्य इत्यर्थवत् सूत्रभाष्यादिविज्ञाते वैयाकरणमते संसर्गरूपे वाक्यार्थे वाक्यस्य संकेतलक्षणः ( शक्तिरूपः ) एव संबन्धः । अन्विताभिधानवादेऽपि पदात् सामान्यरूपेण प्रतीयमानोऽपि संसर्गो विशेषरूपेण वाक्यादेव प्रतीयत इति वाक्यस्य तत्र संकेत एव । अभिहितान्वयवादिनैयायिकमतानुसारेण च पदद्वयसमभिव्याहारविशेषरूपाकाङ्क्षाभास्योऽपि संसर्गस्तत्तत्पदानां तत्तदर्थे शक्त्यभावेन प्रतीयेतेति परम्परया संकेतलक्षणः ( शक्तिज्ञाप्यः ) एवेत्येवमत्र वाक्यवाक्यार्थसंबन्धानां संक्षेपतः स्वरूपं बोध्यम् । अत्र प्रागुक्तेष्वध्यासवाच्यवाचकभावकार्यकारणभावसंकेतलक्षणेषु वाक्यवाक्यार्थयोः संबन्धेषु मध्याद् वाक्यकाण्डेऽध्यास एव वाक्यवाक्यार्थयोः संबन्धो दर्शितो हरिणा ।

तत्र वैयाकरणानां मतेऽखण्ड एवैकोऽनवयवः शब्दः स्फोटलक्षणो वाक्यम्, प्रतिभैव वाक्यार्थः, अध्यास एव च संबन्ध इति, पदं शब्दः, पदसंघातो वाक्यम्, इति वादिपक्षं दूषयित्वाऽखण्डवाक्यशब्द इति पक्षव्यवस्थापनं महाभाष्यटीकाकृता हरिणा कृतं द्वितीयकाण्डे । अत एव वाक्यपदीयद्वितीयकाण्डस्य वाक्यकाण्डमिति संज्ञा ।

अथेदं विचार्यते —आख्यातं साव्ययकारकविशेषणं वाक्यम्, एकतिङ् वाक्यम्, इति वार्तिककारीयं लक्षणद्वयम्। अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद् विभागे स्यादिति जरन्मीमांसकोक्तं वाक्यलक्षणम् । एतयोश्च लक्षणद्वयलक्षणविशेषयोर्वार्तिककारमीमांसकोक्तयोरेकस्मिन् लक्ष्ये समावेश उत भिन्नविषयतेति । तत्र द्वितीयपक्ष एव भिन्नविषयकत्वरूपः समर्थितो हरिणा—

निघातादिव्यवस्थार्थं शास्त्रे यत् परिभाषितम् ।
साकाङ्क्षावयवं तेन न सर्वं तुल्यलक्षणम् ॥ इति ।
( वा. प. २।३ )

तेन न सर्वं तुल्यलक्षणमित्यस्यायं भावः—क्वचिद् द्वयोर्लक्षणयोः समावेशः, क्वचिन्नेति। तद्यथा 'नद्यास्तिष्ठति कूले' इत्यत्र, 'शालीनां ते ओदनं दास्यामि' इत्यत्र च यथायथमाद्ये निघातसिद्धये, द्वितीये च युष्मदादेशसिद्धये समावेशः। 'अयं दण्डो हरानेन' इत्यत्र, 'ओदनं पच तव भविष्यति' इत्यत्र च न समावेशः। वार्तिककारीयलक्षणस्यात्रासत्त्वात्। निघातादेशयोरत्रानिष्टत्वात्। मीमांसकोक्तलक्षणं त्वत्रास्त्येव। 'व्रजानि देवदत्त' इत्यत्र देवदत्तस्योद्देश्यत्वसंबन्धेन लोडर्थामन्त्रणोत्तरकालिके व्रजनेऽन्वयः। तेन समानवाक्यस्थत्वादत्र निघातः संबोधनपदस्याष्टमिकः। अत आख्यातं साव्ययकारकविशेषणं वाक्यमिति वार्तिककारीयवाक्यलक्षणस्य नाव्याप्तिः। देवदत्तस्य वैयधिकरण्येन क्रियान्वयान्न क्रियाविशेषणस्यापि तस्य कर्मत्वं नपुंसकत्वञ्चेति।

ननु पूर्वं स्नाति, पचति, ततो व्रजति, तत इत्यत्र, तत इत्येतस्मादुत्तरस्य व्रजतीत्यस्य निघातो न प्राप्नोति; वाक्यभेदात्। इष्यते चात्र निघात इति चेदत्रोच्यते—

नास्त्यत्र वाक्यभेदः। तथाहि—व्रजतीत्येतत् प्राधान्येनैकं क्रियापदमत्र स्थितम्। अन्यानि क्रियान्तराणि तु तद्विशेषणान्येव। एकवाक्यत्वादेव च तिङन्तादुत्तरस्य तिङन्तस्यातिङिति प्रतिषेधान्निघाताभावः सिद्धः। तदुक्तं हरिणा—

बहुष्वपि तिङन्तेषु साकाङ्क्षेष्वेकवाक्यता।
तिङन्तेभ्यो निघातस्य पर्युदासस्तथाऽर्थवान् ॥ इति।
( वा० प० २।४४२ )

एवञ्च वाक्यलक्षण आख्यातमित्येकवचनं प्रधानीभूतक्रियाभिप्रायेणेत्यविवक्षितमिति वा बोध्यम्। अतिङ्ग्रहणमनर्थकं समानवाक्याधिकारादिति वादिनो वार्तिककारस्य तु वाक्यभेदोऽत्राभिमत इति वार्तिककृन्मते वाक्यलक्षण आख्यातमित्येकवचनं विवक्षितम्। तदुक्तं हरिणा—

एकतिङ् यस्य वाक्यं तु शास्त्रे नियतलक्षणम्।
तस्यातिङ्ग्रहणेनार्थो वाक्यभेदान्न विद्यते ॥ इति।
( वा० प० २।४४३ )

सूत्रकारस्य त्वतिङ्ग्रहणादेकमेवाखण्डं वाक्यमर्थैकत्वादाख्यातभेदेऽप्यभिप्रेतम्। अन्यथा समानवाक्यत्वाभावादेवात्र निघाताप्राप्तिरित्यतिङिङति प्रतिषेधोऽनर्थकः स्यात्। एवञ्च वाक्यलक्षण आख्यातमित्येकवचनमविवक्षितम्। तदुक्तं हरिणा--

अनेकाख्यातयोगेऽपि वाक्यं न्याय्यापवादयोः।
एकमेवेष्यते कैश्चिद् भिन्नरूपमिव स्थितम्॥ इति।
(वा० प० २। ३४८)

एवं वाक्यवद् वाक्यार्थोऽपि प्रतिभारूपोऽखण्ड एव। तदुक्तं हरिणा—

शब्दस्य न विभागोऽस्ति कुतोऽर्थस्य भविष्यति।
विभागैः प्रक्रियाभेदमविद्वान् प्रतिपद्यते॥ इति।
(वा० प० २। १३)

विच्छेदग्रहणेऽर्थानां प्रतिभाऽन्यैव जायते।
वाक्यार्थ इति तामाहुः पदार्थैरुपपादिताम्॥इति च।
(वा० प० २। १४३)

वाक्ये पदप्रत्ययः, वाक्यार्थे च पदार्थप्रत्ययोऽपोद्धारकल्पनया, न तु वस्तुभूतः। किञ्च शास्त्रवासनावतामेव सक्रमा वाक्यवाक्यार्थप्रतिपत्तिः प्रकृतिप्रत्ययादिकल्पनारूपमिथ्याऽध्यास-मूलिका। वस्तुतस्त्वक्रममेव वाक्यं वाक्यार्थश्चेति। वाक्यार्थस्य चास्य जातिवत् प्रत्येकं पदे परिसमाप्तिरिति केचित्। केषाञ्चिन्मते संख्यावत् समुदाये परिसमाप्तिरिति पक्षद्वयम्। तदुक्तं हरिणा—

स त्वनेकपदस्थोऽपि प्रतिभेदं समाप्यते।
जातिवत् समुदायेऽपि संख्यावत् कल्प्यते परैः॥ इति।
(वा० प० २। ४३)

ननु यद्येकपदार्थसंसृष्टापरपदार्थरूपोऽयं वाक्यार्थो नियतसंसर्गो नित्याविभक्तरूपश्च, तर्हि किं कृता क्रियाकारकयोर्गुणप्रधानभावव्यवस्थेति चेच्छृणु—क्रियायां नियमेन साकाङ्क्षं कारकपदं गुणभावेन स्वशक्यं बोधयितुं प्रवर्तते। क्रियायास्तु साध्यत्वेन सकलप्रमाणागोचर-तयाऽपूर्वत्वेन विधेयत्वात् तत्प्रयुक्तं प्राधान्यमिति स्थिते क्रियापदं क्रियायाः साध्यत्वेन हेतुना तस्याः साधकानि निमित्तानि कारकाणीति तद्बोधकानि पदान्यपेक्षत इति। तदुक्तं हरिणा—

गुणभावेन साकाङ्क्षं तत्र नाम प्रवर्तते।
साध्यत्वेन निमित्तानि क्रियापदमपेक्षते॥ इति।
(वा० प० २।४८)

इदञ्च सर्वं पदपदार्थयोर्यथायथं वाक्यात् वाक्यार्थाच्चापोद्धारकल्पनामाश्रित्य व्यवस्थापयितव्यम्। अयञ्च वाक्यवाक्यार्थयोरखण्डत्वपक्षः 'तिङ्ङतिङः' ( पा० सू० ८।१।२८) इति सूत्रेऽतिङ्ग्रहणं कुर्वतः सूत्रकारस्याभिप्रायमनुसृत्याभ्युपगम्यते। भाष्यकाराभिप्रायेणापि स एवाभ्युपगन्तव्यः। तथा च भाष्यम्---'न लक्षणेन पदकारा अनुवर्त्याः, पदकारैर्नामलक्षणमनुवर्त्यम्' इति। तथा--'यथा लक्षणमप्रयुक्ते' ( पा० सू० ) इति च। अत्र यदि पदानां सत्यता स्यात्, तदा तेषां स्वत एव सिद्धत्वात् पदानि कुर्वन्तीति पदकारा इत्येतदसंगतं स्यात्। लक्षणेन च पदकाराणामननुवर्तनं पदानां वस्तुसत्त्वादेव नोपपद्येत। पदकारैर्नामलक्षणमनुवर्त्यमित्यप्यसंगतं स्यात्। पदानां सत्यत्वे लक्षणतः प्रागपि विद्यमानत्वादिति। तथाऽप्रयुक्तपदविषये पदानां सत्यत्वात् तत्प्रविभागोऽयं न सिद्ध इति यथालक्षणं लक्षणानुसारेण करणमप्रयुक्त इत्येतदप्यनुपपन्नमेव। आह चैवं भाष्यकारः, तस्मान्मन्यामहे---पदान्यसत्यानि। एकमभिन्नस्वभावकं वाक्यम्, तस्याबुधबोधनाय पदविभागः कल्पित इति। पदसत्यत्वपक्षश्च----'अतिङः' इति प्रतिषेधप्रत्याख्यानं कुर्वतो वार्तिककृतः। तदुक्तं हरिणा----

अभेदपूर्वका भेदाः कल्पिता वाक्यवादिभिः।
भेदपूर्वानभेदांस्तु मन्यन्ते पददर्शिनः॥ इति।
( वा० प० २।५७ )

ननु यदि पदानि न सत्यानि, तदा 'पदप्रकृतिः संहिता' इति ऋक्प्रातिशाख्यं कथं संगच्छते, अत्र हि पदानि प्रकृतिर्यस्याः संहिताया इत्यर्थो व्याख्यायते; संहिता च वाक्यधर्मः, तस्याः प्रकृतित्वञ्च पदानामुच्यते, पदानाञ्चासत्यत्वात् तदुपादानिका संहिताऽप्यसत्या स्यादिति चेन्न; वाक्याखण्डत्वपक्षे पदानां प्रकृतिः पदप्रकृतिरिति षष्ठीतत्पुरुषाभ्युपगमेनादोषात्। तत्र संहितायाः पदप्रकृतित्वञ्च पदापोद्धारकल्पनावधित्वेन पदयोनित्वरूपं बोध्यम्। तत्र केषाञ्चिन् मते वेदवाक्यरूपेषु शब्देषु सत्येष्वपौरुषेयेषु यानि पदान्याम्नायन्ते तानि पौरुषेयाण्युच्चारयितृपुरुषमतिप्रभवाणि, अथवा शिष्टैः स्मृतान्यस्माभिरनुगम्यन्त इति। केषाञ्चित्तु मते नित्यस्यैकस्यैव शब्दरूपस्याम्नायस्यापौरुषेयस्य द्वे शक्ती। एका वाक्यरूपाऽविभागशक्तिर्यत्र पदान्यविभागेन स्थितानि, अपरा तु पदरूपा विभागशक्तिः। तत्राद्या वाक्यरूपा प्रतिपत्तव्यरूपेण वर्तते। द्वितीया तु पदरूपा प्रतिपादकरूपेणेति विवेकः।

यस्य तु पदसत्यत्ववादिनो मते पदानि प्रत्येकं वाक्यार्थेऽर्थवन्ति तस्य मते वर्णा अपि प्रत्येकं पदार्थेनार्थवन्तः प्राप्नुवन्ति। यदि तु यथा सहवृत्तिषु पदेषु पदान्तरसमभिव्याहृतेष्वेव पदेषु वाक्यार्थः सन्निविशते न तु केवलेषु पदेषु, वाक्यार्थप्रत्ययादर्शनात्; तथैव वर्णेष्वपि

सहवृत्तिष्वेव पदार्थः सन्निविशते, न केवलेष्विति समाधानमुच्यते। तथापि नैतद् युज्यते। तथाहि—यदि पदेषु सहवृत्तिष्वपि निविष्टो वाक्यार्थः प्रतिपदं निविष्ट इति कल्प्यते, तथैव सहवृत्तिष्वपि वर्णेषु सन्निविष्टः पदार्थः कामं वर्णेष्वपि कल्पयितव्यः। न च केवलेषु पदेषु वाक्यार्थः, न वा केवलेषु वर्णेषु पदार्थोऽनुभूयत इत्यनुभवविरुद्धा केवलेषु पदेषु वाक्यार्थेनार्थवत्त्वकल्पना, केवलेषु च वर्णेषु पदार्थेनार्थवत्त्वकल्पनेति पदान्यनर्थकान्येव, यथा वर्णा अनर्थका इति। एवं केवलेषु पदेष्वर्थवत्त्वाभावे पदान्तरैः सहवृत्तिष्वपि पदेष्वर्थवत्त्वं नास्ति। यथैकस्यां सिकतायां तैलाभावे तत्समुदायेऽपि तैलाभाव इति।

एतत् समाधत्ते पदसत्यत्ववादी --नहि किञ्चित् पदं केनचिदप्यर्थेनानिरूपितमिति युज्यते वक्तुम्, केवलपदजन्यपदार्थप्रत्ययानुभवविरोधात्। अनुव्यवसीयते हि पदजन्यत्वेन पदार्थप्रत्ययः, घटपदाद् घटं प्रत्येमीति। यथा चैवं पदोच्चारणकालेऽस्ति काचिदर्थप्रतीतिरिति, तेनार्थेन पदमर्थवदित्यभ्युपेयते; एवं तेनैवार्थेन परस्परं संहता वर्णा अप्यर्थवन्तो भविष्यन्ति, न तु केवलाः, वस्तुस्वाभाव्यात्। तस्माद् यथा समुदिता वर्णाः परस्परशक्त्यावेशात् पदार्थवाचकाः, एवं पदान्यपि पदान्तरसमभिव्याहाराद् वाक्यार्थवाचकानीति न किञ्चिद् वर्णपदव्यतिरेकेण वाक्यं नामास्तीति। तदुक्तम् —

यावन्तो यादृशा ये च यदर्थप्रतिपादने।
वर्णाः प्रज्ञातसामर्थ्यास्ते तथैवावबोधकाः॥ इति।
( मी० श्लो० वा० स्फोटवादे ६९ )

यदि च पदनिबन्धनो वाक्यावभासः, पदार्थनिबन्धनश्च वाक्यार्थावभासो नाङ्गीक्रियते, तदा 'कुशादीनां शरादिप्रतिनिधिकल्पनम्' अस्मिन् वाक्ये पिकपदस्य कोऽर्थ इत्यादिरूपः पिकादिनियतपदप्रश्नः, श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमिति पारमर्षसूत्रोक्तं श्रुतिवाक्यप्रमाणयोः परस्परविरोधे श्रुतेर्बलीयस्त्वम्, एकस्मिन् पद्ये महावाक्यात्मकेऽवान्तरवाक्यानामर्थवत्त्वञ्च न स्यात्, क्रियाया अपि चाप्रतिनिधेयत्वेन सम्मतायाः प्रतिनिधिः कल्प्येत, प्रतिनिधिद्रव्यरूपसाधनविशिष्टायास्तस्यास्तन्मते क्रियान्तरत्वात्, तत्तदर्थे पदानां साधुत्वबोधनार्थं लक्षणप्रणयनानुपपत्तिश्चेति षट् चोद्यान्यापतन्ति वाक्यवाक्यार्थयोरखण्डत्ववादिनः। किञ्च सर्वाणि यानि न्यायलक्षणानि तेषां व्यवस्थाया विरुद्धोऽप्ययं वाक्यवाक्यार्थयोरखण्डत्वपक्षः। तत्र द्वादश षट् चतुर्विंशतिर्वा न्यायलक्षणानि पूर्वमीमांसायां द्वादशभिरध्यायैः, षड्भिर्वा प्रतिपादितानीति तत्तत्सख्यामितानि। चतुर्विंशतिसंख्याऽपि द्वादशाध्यायीप्रतिपाद्यं यद् विध्यादिषट्कमतिदेशषट्कञ्च तत्प्रतिपक्षभूतान्यद्वादशपदार्थीप्रति-

पादनेन द्वादशाध्यायानां संपत्स्यते। ते चामी वाक्यगता न्यायाः पदार्थोपनिबन्धनाः सकलशास्त्रीयलौकिकव्यवहारनिबन्धनभूताः पदपदार्थानङ्गीकारे न प्रकल्पन्ते।

इदञ्चात्रावधेयम्। एतैर्युक्तसंख्याकैर्न्यायैर्विज्ञातैर्वाक्यार्थो यथावल्लक्ष्यते निश्चीयत इत्येतानि लक्षणानीत्युच्यन्ते मीमांसकैः। तत्र षट्, द्वादश, चतुर्विंशतिर्वा लक्षणानि भवन्तु तावदिहैतानि प्रदर्श्यन्ते। एतेषाञ्च सविस्तरं सोपपत्तिकं सदृष्टान्तञ्च स्वरूपं पदकाण्डे वाक्यपदीये लक्षणसमुद्देशे विनिर्दिष्टमिति हरिणा स्वयमेव प्रतिपादितं द्वितीयकाण्डस्य षट्सप्ततितमकारिकाया व्याख्यावसरे।' तत्र द्वादश, षट्, चतुर्विंशतिर्वा लक्षणानीति ल..णसमुद्देशे सापदेशं सविरोधं विस्तरेण व्याख्यास्यते' इति हि तदीयो ग्रन्थः। संप्रदायभ्रंशाल्लेखकप्रमादादिना वा लक्षणसमुद्देशश्च भ्रष्ट इति साम्प्रतमपि पदकाण्डमध्ये मृग्यमाणोऽपि नोपलभ्यते। तत्र तावद् द्वादश लक्षणानि पूर्वमीमांसाशास्त्रस्य द्वादशस्वध्यायेषु सप्रपञ्चं प्रासङ्गिकविचारसहितानि निर्णीतानि। अत एव च पूर्वमीमांसा द्वादशलक्षणीति व्यवह्रियते शिष्टैः। तथा च तत्र–'अथातो धर्मजिज्ञासा' (मी० सू० १।१।१) इत्युपक्रम्य 'को धर्मः', 'किंलक्षणकश्च'इत्याद्याशङ्कानिरासार्थं प्रवृत्तेन 'चोदनालक्षणोऽर्थो धर्मः' (मी० सू० २१।१।२) इति द्वितीयेन सूत्रेण चोदनालक्षणे धर्मे निर्णीते धर्मे चोदनैव प्रमाणमित्युक्तम्, चोदनैव लक्षणं यत्रेति व्युत्पत्तेः। अत्र लक्षणपदेन करणव्युत्पत्त्या प्रमाणमुच्यते। तत्र मतभेदेन चोदनाया विधिनियोगेत्यादिका विविधाः संज्ञाः प्रदर्शिताः।

तद् यथा भट्टमते विधिरिति, प्रभाकरमते नियोग इति कार्यमित्यपूर्वमिति। अयञ्च संज्ञाभेदो लिङाद्यर्थभेदादिति। चोदनायामेव च स्वतःप्रामाण्यं व्यवस्थापितम्। तदनुरोधेन चेतरेषामपि प्रमाणानां प्रत्यक्षादीनां स्वतः प्रामाण्यमुपपादितं प्रथमेऽध्याये प्रमाणसंज्ञके, अविशिष्टे प्रामाण्येऽर्धजरतीयस्यानौचित्यादिति। चोदना च शब्दप्रवृत्तिसंख्यादिभेदाद् भिन्नरूपेति। अस्या भेदप्रतिपादनाय द्वितीयोऽध्यायः। शब्दादिना भेदेन प्रतिपादितस्य च कर्मणः शेषशेषिभावेन विनियोगप्रतिपादनाय तृतीयोऽध्यायः। विनियुक्तस्य च प्रयोजकाप्रयोजकभावप्रतिपादनाय चतुर्थोऽध्यायः। कस्यचित् किञ्चित् प्रयोजकत्वं तत्रोपदर्शितम्। कस्यचित् त्व ्रयोजकत्वं तत्प्रतिपक्षभूतम्। श्रुत्यर्थपाठादिभिः प्रमाणैरङ्गानां क्रमेण विनियोग इति तदर्थं पञ्चमोऽध्यायः। एतत् समग्रं साङ्गं कर्मचोदनया यदर्थं प्रतिपाद्यतेऽसौ फलार्थी शरीरेण वित्तेन च समर्थः शास्त्रेणानिषिद्धजात्यादिरपतितोऽधिकारीति तस्य प्रतिपादनाय षष्ठोऽध्यायः। एवं विधिभेदशेषशेषिभावप्रयुक्तिक्रमाधिकारिणां प्रतिपादनायाध्यायाः षडिति षड् न्यायलक्षणानि। याभिश्चोपपत्तिभिर्विध्यादयो निर्णीतास्ता अत्र न्यायपदेन विवक्षिताः।

इदञ्चाध्यायषट्कं प्रकृतियागसंबन्धित्वात् प्रकृतिषट्कमिति, विधिसंबन्धित्वाच्चोपदेशषट्कमित्यप्यभिधीयते। एते च षडध्यायीप्रतिपाद्या न्याया वाक्यवाक्यार्थयोरविभागाभ्युपगमे पदपदार्थानङ्गीकारे च नोपपद्यन्ते, विध्यादीनां पदप्रतिपाद्यत्वात्, पदार्थरूपत्वात्, पदार्थसंबन्धित्वाद्वेति।

तदनन्तरं यत्र कर्मणि इतिकर्तव्यता नोक्ता, तदपि कर्मसादृश्येन स्वप्रकृतिभूतादन्यस्मात् कर्मण इतिकर्तव्यतामाप्नोति। कर्मान्तरसादृश्येन प्रकृतिवद् विकृतिः कर्तव्येति न्यायबलाद् विध्यङ्गसामान्यातिदेशादिति प्रतिपादनाय सप्तमोऽध्यायः। क्वचित् कर्मण्यतिदेशवचनसामर्थ्याद् विशेषा एव मन्त्रादयोऽतिदिश्यन्ते, न तु सामान्यं पर्णतादि, तस्यानारभ्याधीतत्वेन कर्मसामान्यसमवायित्वादिति निरूपणायाष्टमः। अतिदेशप्राप्ते मन्त्रे प्रकृतियागदेवताविकृतियागदेवतात्वेन विपरिणमयितव्येत्यादिसमर्थनाय नवमः। सामान्यशास्त्रस्य विशेषशास्त्रेणानवकाशेन तदितरपरतात्मकसंकोचरूपबाधाभिधानाय दशमोऽध्यायः। येन सकृदनुष्ठानादुभयसिद्धिस्तत् तन्त्रम्, तत्प्रतिपानार्थमेकादशः। यदन्यार्थमारब्धमन्यदप्येकेनैव प्रयत्नेन सम्भवलाघवाभ्यां निष्पादयति, तत् प्रासङ्गिकम्। तदुक्तये द्वादशोऽध्याय इत्यनेनातिदेशषट्केन सह पूर्वोक्तं प्रकृतिषट्कमादाय द्वादशाध्यायोक्तानि द्वादश न्यायलक्षणानि संपद्यन्ते।

एतेषां द्वादशानां न्यायलक्षणानां प्रतिपक्षभूतान्यन्यानि द्वादश लक्षणानि यथायोगमेतेष्वेवाध्यायेषु तत्र तत्र दर्शितानि। तत्र प्रमाणस्य प्रतिपक्षोऽसंभवः। अप्रमाणस्य प्रमाणस्थाने विनियोगोऽसंभवः। भेदस्य तु शब्दादिभेदभिन्नस्याभेदः प्रतिपक्षभेदाविवक्षा च। शेषशेषिभावस्य गुणप्रधानभावाविवक्षा प्रतिपक्षः। प्रयोजकत्वरूपायाः प्रत्युक्तेरप्रयोजकत्वं प्रतिपक्षः। क्रमस्य प्रतिपक्षस्तदविवक्षा। अधिकारिणः प्रतिपक्षोऽधिकारनिषेधः। प्रकृतियागसंबद्धस्य मन्त्रस्य मन्त्रभागस्य वा विकृतियागे संबन्धस्याबाधः सामान्यातिदेशविशेषातिदेशयोरपवादः। तुल्यबलानामविरोधात् समुच्चयो बाधस्यापवादः। तुल्यबलानामचरितार्थानां विरोधाद् विकल्पोऽपि बाधस्यापवादत्वेन प्रदर्शितः। तन्त्रस्य त्वावृत्तिः प्रतिपक्षः। एकप्रयत्ननिर्वर्त्यमपीच्छावशाद् भेदेनेच्छतीत्येवंलक्षणको यो भेदः स उक्तलक्षणस्य प्रासङ्गिकस्यापवादः। एषा च न्यायलक्षणानां चतुर्विंशतिर्लोके व्याकरणे चोदाहृता सविस्तरं मदीयायां वाक्यपदीयटीकायामिति विस्तरभयान्नात्रोदाह्रियते।

एते च न्याया द्वादशलक्षण्यां मीमांसायामुक्ता अन्येऽपि च स्वयमभ्यूहिता गुरुपरम्पराप्राप्ता वा प्रदर्शिताः संगृह्य वाक्यपदीये द्वितीयकाण्डे हरिणा--

प्रासङ्गिकमिदं कार्यमिदं तन्त्रेण लभ्यते।<br>
इदमावृत्तिभेदाभ्यामत्र बाधसमुच्चयौ ॥ ७७ ॥

ऊहोऽस्मिन् विषये न्याय्यः संबन्धोऽस्य न बाध्यते ।
सामान्यस्यातिदेशोऽयं विशेषोऽत्रातिदिश्यते ॥ ७८ ॥
अर्थित्वमत्र सामर्थ्यमस्मिन्नर्थो न भिद्यते ।
शास्त्रात् प्राप्ताधिकारोऽयं व्युदासोऽस्य क्रियान्तरे ॥ ७९ ॥
इयं श्रुत्या क्रमप्राप्तिरियमुच्चारणादिभिः ।
क्रमोऽयमत्र बलवानस्मिंस्तु न विवक्षितः ॥ ८० ॥
इदं पराङ्गैः संबद्धमङ्गानामप्रयोजकम् ।
प्रयोजकमिदं त्वेषामत्रेदं नान्तरीयकम् ॥ ८१ ॥
इदं प्रधानं शेषोऽयं विनियोगक्रमस्त्वयम् ।
साक्षादस्योपकारीदमिदमाराद् विशेषकम् ॥ ८२ ॥
शक्तिव्यापारभेदोऽस्मिन् फलमत्र तु भिद्यते ।
संबन्धाज्जातभेदोऽयं भेदस्त्वत्राविवक्षितः ॥ ८३ ॥
प्रसज्यप्रतिषेधोऽयं पर्युदासोऽयमत्र तु ।
इदं गौणमिदं मुख्यं व्यापीदं गुरुलघ्विदम् ॥ ८४ ॥
भेदेनाङ्गाङ्गिभावोऽस्य बहुधेदं विकल्प्यते ।
इदं नियम्यतेऽस्यात्र योग्यत्वमुपजायते ॥ ८५ ॥
अस्य वाक्यान्तरे दृष्टाल्लिङ्गाद् भेदोऽनुमीयते ।
अयं शब्दादपोद्धृत्य पदार्थः प्रविभज्यते ॥ ८६ ॥
इति वाक्येषु ये धर्माः पदार्थोपनिबन्धनाः ।
सर्वे ते न प्रकल्पेरन् पदं चेत् स्यादवाचकम् ॥ ८७ ॥ इति ।

एवं पदवादिदत्तेऽखण्डवाक्यवाक्यार्थपक्षे दूषणव्राते समापित इदानीमेतत् समाधीयते । प्रागुक्तं सर्वं न्यायविरोधादिकं वाक्यवाक्यार्थाखण्डत्ववादिनो मतं न विरुध्यते । तथा हि—एतस्य मतस्य द्वयी स्थितिः । सत्यपि वाक्यार्थे पदार्थप्रविभागेऽवान्तरवाक्यार्थप्रविभागे च पानकरसादिवदेकोऽखण्डो वाक्यार्थः प्रतीयत इति प्रातीतिकी अखण्डता वाक्यार्थस्य वाक्यस्य च न वास्तवीत्येकं मतम् । अस्मिन्मते चैकस्मिन्नपि प्रातीतिके वाक्यार्थे समाश्रीयमाणे वाक्ये पदार्थावान्तरवाक्यार्थप्रतीत्यनुकूलशक्तिविशेषसमाश्रयणेन च पदार्थावान्तरवाक्यार्थयोर्बुद्ध्याऽपोद्धारे कृते सति पदार्थावान्तरवाक्यार्थप्रतीत्युपजननात् सर्वं प्रागुक्तं नानुपपन्नं भविष्यतीति ।

अपरन्तु मतम्—यथा बौद्धदर्शने निर्विभागमेकमेव सकलत्रैलोक्यविलक्षणं स्वतो व्यावृत्तस्वभावं द्रव्यं स्वलक्षणं व्यक्तिरूपमभ्युपगम्यते। तत्तदितरपदार्थव्यावृत्तिरूपापोहसमाश्रयणेन च जात्यादिव्यवहारः कश्चिन्निर्वाह्यते, न तु वस्तुगत्या स्वलक्षणे जात्यादिरस्तीति, तथैवाखण्डवाक्यवाक्यार्थवादिना शक्तिभेदाद् वाक्यार्थेऽवान्तरवाक्यार्थप्रविभागे पदार्थप्रविभागे च प्रातीतिके कृते सति सर्वं युज्यत इति न कश्चिद् दोषः प्रागुक्त इति। एतत् सर्वं संगृह्योक्तं हरिणा—

अविभक्तेऽपि वाक्यार्थे शक्तिभेदादपोद्धृते।
वाक्यान्तरविभागेन यथोक्तं न विरुध्यते॥ इति।
(वा० प० २। ८८)

वाक्यवाक्यार्थयोरखण्डत्वमेव प्रसिद्धदृष्टान्तोपदर्शनेन समर्थितं हरिणा—

यथैवैकस्य गन्धस्य भेदेन परिकल्पना।
पुष्पादिषु तथा वाक्येऽप्यर्थभेदो विधीयते॥ इति।
(वा० प० २। ८९)

व्याख्यातञ्च तेनैवैवम् "स्रक्चन्दनादावेक उपसन्निविष्ट एव गन्धस्तस्य त्वपोद्धारसमाश्रयणेन भेदः कल्प्यतेऽयं पुष्पगन्धोऽयं चन्दनगन्ध इत्यादि। तथा वाक्य एव पदार्थापोद्धारसमाश्रयणेन पदार्थभेद उपपद्यते—अयं देवदत्तपदार्थः, अयं गोपदार्थ इत्यादि" इति। दृष्टान्तरमप्यत्र तेनैवोक्तम्—

गवये नरसिंहे वाऽप्येकज्ञानावृते यथा।
भागं जात्यन्तरस्यैव सदृशं प्रतिपद्यते॥
(वा० प० २। ९०)

तथा पिकादियोगेन वाक्येऽत्यन्तविलक्षणे।
सदृशस्येव संज्ञानमसतोऽर्थस्य मन्यते॥ इति।
(वा० प० २। ९२)

वस्तुतस्तु पदसत्यत्ववादो न युक्तः। तथा हि—यदि पदान्येव सत्यानि तदा दध्यानयेत्यादिसंहितायां पदरूपविनाशात् पदस्य नियतस्याभावे कमवधिं गृहीत्वा तदर्थो विविच्यताम्। अतः प्रविभागशून्यं वाक्यमेवैकं सत्यमभ्युपगन्तव्यम्।

ननु वाक्याखण्डत्वपक्षे श्वेतो धावतीत्येतत्प्रश्नद्वयापाकरणाय कथमेकं वाक्यम्? अत्र हि 'श्वा' इत्येतद्रूपं संहितावशाद् विनष्टमित्येतत्पदार्थासम्भवात् कथं तदवगतिरिति चेन्न; वाक्याखण्डत्वपक्षे पक्षद्वयेन समाधानसंभवात्। तथाहि—श्वेत इत्यखण्डं 'श्वा इतः' इति, 'श्वेतः' इति

रूपद्वयस्य प्रतिपादकम्, प्रतीताच्च रूपद्वयादर्थद्वयस्य बोध इत्येकः पक्षः। श्वेत इत्यखण्डं रूपमेवावृत्त्या प्रविभागकल्पनयोभयार्थप्रतिपादकमिति द्वितीयः पक्षः। तत्र प्रत्याय्यप्रत्यायकयोः शब्दस्वरूपयोर्भेदे प्रथमः पक्षः, तयोरभेदे तु द्वितीयः पक्षः। इमौ च प्रत्याय्यप्रत्यायकयोर्भेदाभेदपक्षौ शास्त्रे लक्ष्यसिद्ध्यै द्वावपि तत्र तत्र समाश्रिताविति नानयोरेकः साधुत्वेन निर्धारयितुं शक्यते। यतो द्वावप्येतौ पक्षौ शास्त्रे दृष्टौ। तदुक्तं हरिणा—

शास्त्रे प्रत्यायकस्यापि क्वचिदेकत्वमाश्रितम्।
प्रत्याय्येन क्वचिद् भेदो ग्रहणग्राह्ययोः स्थितः॥
ऊ इत्यभेदमाश्रित्य यथासंख्यं प्रकल्पितम्।
लङ्लृटोर्ग्रहणे भेदो ग्राह्याभ्यां सह कल्पितः॥ इति।
( वा० प० २। ६८-६९ )

यद्यपि वाक्यतदर्थयोरखण्डत्वे सुस्थितेऽपि तन्त्रेणावान्तरवाक्योपप्लावनेन वाऽर्थत्रयबोधाय ऊ काल इति निर्देशं कुर्वतः सूत्रकृतः प्रत्याय्यप्रत्यायकयोरभेद एवेष्टस्तथापि 'प्लुतावैच इदुतौ' ( पा० ८।२।१०६ ) इतिसूत्रस्थवार्तिकतद्भाष्यदर्शनेन तेषां शब्दानां परस्परं भेदपक्ष एव वार्तिककारस्याभिरुचित इति गम्यते। तथा हि—'प्लुतावैच इदुतौ' इति सूत्रस्यैचः प्लुतप्रसङ्गे तदवयवाविदुतौ प्लुतौ भवत इत्यर्थः। ऐ ३ तिकायनः, औ ३ पगव इति चोदाहरणम्। चतुर्मात्रावत्त्वैचौ संपद्येते। अत्र च वार्तिककृता ऐचोऽवयवयोरिकारोकारयोः प्लुतः, तथा पररूपेऽचोः पूर्वपरयोः समाहारश्च प्रतिषिद्धः। तेन वार्तिककृतः प्रत्याय्यप्रत्यायकयोर्भेद एवेष्ट इति गम्यते। भाष्यकृतोऽपि यद्यपि स एवेष्टः। तथापि प्रागुक्तरीत्या सूत्रकृदभिप्रेतोऽभेदपक्षस्तन्मूलभूतं तन्त्रञ्च शास्त्रसिद्धान्त इति विज्ञेयम्। तथा हि—'प्लुतावैच' इति सूत्रे भाष्ये उक्तम् 'अङ्गविवृद्धिर्नोपपद्यते, नह्यैचोऽवयवोऽकार इकार उकारो वा' ( म० भा० २।२६ ) इत्येवमङ्गविवृद्धिं प्रतिषेधता वार्तिककृता 'तावेव शब्दावेकत्र सम्मिलिताविति यः प्रागुपदर्शितः प्रत्याय्यप्रत्यायकयोरभेदः स पराकृतः' ( म० भा० २।२६ ) इति।

किञ्च यथा गीतिभेदेनोदीरिता ऋच एव सामाख्यां प्रतिलभन्ते, गीतिभेदेनोदीरणक्रियामात्रं वा सामपथोच्यते। तदुक्तम्—गीतिषु सामाख्या इति। एवं श्वेत इत्यादावविकृतेषु शब्देषु संहितयाऽभिधानक्रियायोगात् श्वा इव इत्यादिरूपभेदप्रकाशोऽर्थभेदप्रकाशश्चेति। तदेवं प्रत्याय्यप्रत्यायकयोर्भेदाभेदविवक्षया भिन्नेन प्रत्याय्यप्रत्यायकभावेनात्यन्तभेदरूपेण वा तेन, तन्त्रेण तत्प्रतिपक्षेण वाऽवान्तरवाक्योपप्लावनरूपेण श्वेतो धावतीत्यत्र वाक्यस्यैकत्वेऽप्यर्थभेदो भविष्यतीति न वाक्याखण्डत्ववादिपक्षे पदानामनभ्युपगमेऽपि काचित् क्षतिरिति। श्वेतो

धावतीत्यादौ द्वयोरखण्डयोर्वाक्ययोस्तन्त्रेणोच्चारणान्न वाक्याखण्डत्ववादिनः काचित् क्षतिरिति प्रदर्शितं हरिणा कारिकाचतुष्टयेन—

उपायाच्छ्रुतिसंहारे भिन्नानामेकशेषिणाम् ।
तन्त्रेणोच्चारणे तेषां शास्त्रे साधुत्वमिष्यते ॥
परिगृह्य श्रुतिं चैकां रूपभेदवतामपि ।
तन्त्रेणोच्चारणं कार्यमन्यथा तेन साधवः ॥
सरूपाणाञ्च वाक्यानां शास्त्रेण प्रतिपादितम् ।
तन्त्रेणोच्चारणादेकं रूपं साधूपलभ्यते ॥
एकस्यानेकरूपत्वं नालिकादिपरिग्रहात् ।
यथा तथैव तन्त्रात् स्याद् बहूनामेकरूपता ॥ इति ।
( वा० प० २ । १०८-१११ )

अखण्डे महावाक्येऽवान्तरवाक्यानामर्थवत्त्वमपि समर्थितं हरिणा—

यथा पदसरूपाणां वाक्यानां सम्भवः पृथक् ।
तथा वाक्यान्तराभावे स्यादेषां पृथगर्थता ॥ इति ।
( वा० प० २ । ११२ )

तदेवं यद्यपि वाक्यवाक्यार्थयोरखण्डत्वमेव परमार्थतस्तथाप्यनेकशास्त्रभावनासमाश्रयाणां पुंसा तयोर्बहुधा प्रवादाः श्रूयन्ते ।

वस्तुतस्तु वाक्यार्थः प्रतिभारूपतयैक एव, सर्वोऽपि शब्दः समनन्तरकार्यविबोधरूपायाः प्रतिभाया एव हेतुः । अत एव सर्वेषां शब्दानां कार्यपरत्वमेवेति मीमांसका आस्थिषत । आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानामिति ( मी० द० अ० पा० सू० ) विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युरिति ( मी० द० अ० पा० सू० ) च सूत्रद्वयं शब्दानां कार्यपरत्वे मूलम् । तदेतदुक्तं हरिणा—

अभ्यासात् प्रतिभाहेतुः शब्दः सर्वोऽपरैः स्मृतः ।
बालानाञ्च तिरश्चाञ्च यथार्थप्रतिपादने ॥ इति ।
( वा० प० २ । ११७ )

अस्यार्थः —अपरैराचार्यैः सर्वः शब्दः पदरूपो वाक्यरूपो वा ध्वन्यात्मको वर्णात्मको वा । बालानाञ्च तिरश्चाञ्च, बालानामपि तिरश्चामप्यविदितसंकेतानां किमुत बुद्धिमतां विदितसंकेतानां यथार्थप्रतिपादनेऽभीष्टेऽभ्यासाद्, व्यवहारे प्रयुज्यमानतत्तच्छब्दतदर्थग्रहाभ्यासजनित-

संस्कारवशात् प्रतिभाहेतुः स्मृत इति। ध्वन्यात्मकोऽपि शब्दः प्रतिभाहेतुर्यथा—करतालिका-शब्दात् काकाः पलायन्ते। घण्टाशब्दाच्च छात्रा अध्यापकाश्चाध्ययनेऽध्यापने च यथायथं प्रवर्तन्त इत्यादिकमुदाहार्यम्। तथा च जडानामपि प्राणिनां साण्डमहिषादीनामभिमुखी-करणाय नियतपदः शब्द उदीर्यते। तेन प्रतिनियतजात्यनुसारेणैव नियतैव काचित् प्रतिभा प्रबोध्यत इति प्रतिभामूलक एव सर्वो यः कश्चित् तेषां साण्डमहिषादीनां प्रवृत्त्यादिरूपो व्यवहार इति। किञ्च यत इयं शब्दनिमित्ता प्रतिभा सर्वप्राणिसंवेद्या सर्वेषां प्राणिनां सकल-व्यवहारमूलभूता चातोऽनपह्नवनीया। तदपह्नवे स्वात्मैव विप्रलभ्यते। तस्मात् प्रतिभाऽभ्युपगम आवश्यक इति। "अभ्यासात् प्रतिभाहेतुः शब्द" इत्युक्तं प्राक्। तत्राभ्यासः किमिदानीन्तन उत जन्मान्तरभावी। तस्य चाभ्यासः किं स्वरूपमिति जिज्ञासायामुक्तं हरिणा—

अनागमश्च सोऽभ्यासः समयः कैश्चिदिष्यते।
अनन्तरमिदं कार्यमस्मादित्युपदर्शनम्॥ इति।
(वा० प० २। ११८)

अस्यार्थः—स चाभ्यासोऽनागम इदानीन्तनो न भवति। नहि बालस्य तदैवोपदिष्टं केनचिदिति जन्मान्तरभाव्येव स च समय इष्यते। संकेतस्वरूपोऽसाविष्यत इति। अभ्यासस्य स्वरूपमुक्तमत्रोत्तरार्धेन। स चानन्तरमिदं कार्यमित्युपदर्शनस्वभावः। यथा कशाभिघातमात्र-समनन्तरमेव वाजिनोऽतिशयेन वेगेन यान्ति। अङ्कुशाभिघातेन च गजाः। एवमन्येऽपि प्राणिनो यथास्वमनादिवासनाभ्यासवशेन प्रतिभातः स्वजात्यादिसमुचितं व्यवहारं कुर्वन्तो लोकयात्रां निर्वाहयन्तीति स्थितम्। एवञ्चाखण्डमेव वाक्यम्, प्रागुक्तरूपा प्रतिभैव चाखण्ड। वाक्यार्थ इति मतमेव समाश्रयणीयम्। पदपदार्थापोद्धारकल्पनामाश्रित्य च प्रतिनिध्यादिकल्पनं प्रासङ्गिकादिन्यायनिर्वाहश्च भविष्यतीति व्यवस्थापितम्।

ननु वाक्ये कल्पनया पदपदार्थप्रविभागश्चेत् समाश्रितस्तदुच्यतां पदस्यार्थ इति चेत्—शृणु, मतभेदेन द्वादशविधान् पदार्थप्रविभागान्। तत्राद्य उक्तो हरिणा—

अस्त्यर्थः सर्वशब्दानामिति प्रत्याय्यलक्षणम्।
अपूर्वदेवतास्वर्गैः सममाहुर्गवादिषु॥ इति।
(वा० प० २। ११९)

अयं भावः—अपरामृष्टाकारविशेषमर्थसामान्यं सर्वशब्दानां वाच्यमिति केचिदाहुः। एतच्चार्थसामान्यं गवादिपदेष्वप्यपूर्वदेवतास्वर्गपदार्थैः सममेवापरामृष्टाकारविशेषमाहुः।

अपूर्वदेवतादिपदेषु हि नाकारविशेषस्य प्रथनम्। यत्तु गवादिपदेष्वाकारविशेषस्य प्रथनं तत् स्मृत्युपस्थापितस्याकारविशेषस्य निर्विशेषं न सामान्यमिति न्यायेन नान्तरीयकतयेति बोद्धव्यम्। यद्याकारविशेषः पदार्थः स्यात्, तदाऽपूर्वशब्दाद् देवताशब्दात् स्वर्गशब्दादश्वगवादिशब्दवदाकारविशेषप्रथनं स्यात्। यतश्च तेभ्यो नास्त्याकारादिप्रथनमतोऽर्थसामान्यमेव सर्वैः शब्दैः प्रत्याय्यत इति युक्तम्। एवञ्च गवादिपदेष्वप्यर्थसामान्यमेव वाच्यम्। आकारविशेषस्त्वयं गौरित्याप्तोपदेशेन संकेतग्रहेऽनुभूतस्य स्मृत्या नान्तरीयकतया प्रथते, विशेषाविनाभावित्वात् सामान्यस्य। अपूर्वादिपदार्थानान्तु चोदनामात्रगम्यत्वेनाकारादिविशेषवत्तया प्रागननुभूतत्वेन न तथाऽपूर्वादिपदेभ्यः प्रथनमिति विशेषः। एवञ्च यदा गोशब्दप्रयोगं सास्नादिमत्स्वेव भूयो भूयः पश्यति, तद्दर्शनाभ्यासाच्च यस्तत्राकारपरिग्रहः स शब्दस्य प्रत्ययो न भवति। किन्तु तत्र स आकारविशेषः प्रयोगदर्शनाभ्यासरूपेण यत्नान्तरेण निमित्तभूतेन शब्दावगम्यातिरिक्तेन रूपेण प्रथते। ततश्च प्रयोगदर्शनाभ्यासरूपोऽसावाकारविशेषावग्रहहेतुर्यतः शब्दव्यापारो न भवत्यतः शब्दस्यार्थसामान्यमेव जात्यादिरूपमपरामृष्टाकारविशेषं वाच्यं युक्तमित्येकः पक्षः।

अथ कश्चिच्छब्दवाच्योऽर्थो जात्यादिरूपः, कश्चित्तत्राकारोऽनुनिष्पादी (जात्यादिरूपस्यार्थसामान्यस्य प्रत्ययानन्तरं प्रतीयमानः) जात्यादिरूपस्यार्थस्याभिव्यक्तौ साहचर्येण प्रयोजकः, सोऽपि शब्दान्वयव्यतिरेकानुविधानेन प्रतीयमानः शब्दवाच्य एवेति द्वितीयः पक्षः। तदुक्तं हरिणा—

केचिद् भेदाः प्रकाश्यन्ते शब्दैस्तदभिधायिभिः।
अनुनिष्पादिनः कांश्चिच्छब्दार्थं इति मन्वते॥ इति।
(वा० प० २। १२१)

व्याख्यातञ्चेदमेवं पुण्यराजेन—"केचिद् भेदा जात्यादयः शब्दवाच्याः, केचित्तत्रार्थप्रयोजका अनुनिष्पादिन एव। तथा तांश्च शब्दार्थं इत्यपरे मन्यन्ते, इति। अत्र कारिकायां मन्वत इत्युक्त्याऽत्र पक्षे हरेररुचिः सूच्यते। अपरे मन्वते वयं तु न मन्यामहे" इति। तथाहि—अत्र शब्दैर्जात्यादिरूपस्यार्थसामान्यस्यैव भानम्, लाघवात् प्रथमोपस्थितत्वादव्यभिचारित्वाच्च तत्रैव शब्दानां संकेतस्वीकारात्। शब्दाज्जात्यादिप्रत्यये जातेऽनुनिष्पादिन्याकारविशेषप्रतीतिस्तु जात्यादिरूपेणार्थसामान्येन सहाकारविशेषस्य व्यङ्ग्यव्यञ्जकभावसंबन्धमूलिका स्मृतिरेव। शब्दान्वयव्यतिरेकानुविधानन्त्वनन्यथासिद्ध जात्यादिप्रत्यय एवाव्यवहिते प्राग् भाविनि, आकारविशेषप्रत्यये तु व्यवहिते पश्चाद्भाविनि तदन्यथासिद्धम्, जात्यादिप्रत्ययेन स्मृतस्य व्यङ्ग्य-

व्यञ्जकभावसंबन्धस्यैव तज्जनकत्वसंभवादिति ।

अथ सर्व एवाकाराः सामान्यरूपा विशेषरूपाश्च, साध्यरूपाः साधनरूपाश्च, गुणप्रधानभावेनावस्थिताः पदस्यार्थः । तत्रार्थसामान्यं गुणत्वेनावस्थितम् । अर्थविशेषस्तु प्राधान्येनेति, साध्यरूपोऽर्थः प्राधान्येनावस्थितः, साधनरूपस्तु गुणत्वेनेति, अयं तृतीयः पक्षः । तदुक्तं हरिणा—

नियतास्तु प्रयोगा ये नियतं यच्च साधनम् ।
तेषां शब्दाभिधेयत्वमपरैरनुगम्यते ॥ इति ।

( वा० प० २ । १२५ )

व्याख्यातश्च पुण्यराजेन—'येन केनचिद् विना शब्दस्याभिधेयं न निर्वहति तत्सर्वं साध्यसाधनात्मकं शब्दाभिधेयं वक्तुं युक्तम्। किञ्चित् प्रत्याय्यते, अन्यत् तत्र नान्तरीयकतयाऽवगम्यते, इत्यपि न शोभनम् । किन्तु सर्वाकारमेवाभिधेयं गुणप्रधानभावेन तस्मात् प्रतीतमित्ययं पक्षः शोभनः' इति । साध्यसाधनात्मकः सामान्यविशेषात्मकश्च समुदाय एव, यस्तुल्यकक्ष्यतयाऽवस्थितो न तु गुणप्रधानभावेन स शब्दस्यार्थः । समुदायघटकपदार्थानां गुणप्रधानभावस्तु शाब्दबोध एव, न तूपस्थिताविति चतुर्थः पक्षः । तदुक्तं हरिणा—

समुदायोऽभिधेयो वाऽप्यविकल्पसमुच्चयः । इति ।

( वा० प० २ । १२६ )

ननु यद्याकारादिसमुदायं समुच्चितमेव प्रत्याययति, तर्हि बहुवचनमेव तत्र स्यात्, दृश्यते चैकवचनमपि । अथ विकल्पितमेव प्रत्याययति, तदा बहूनामेकवचनानां वा शब्दोत्तराणां प्रयोगरूपो वचनविकल्पः स्यादित्याशङ्क्याह —अविकल्पसमुच्चय इति । अयं श्लोकार्थस्तत्त्वसंग्रहे २८४ तमे पृष्ठे उदाहृतस्तत्र पञ्जिकायां व्याख्यातश्च । सा च व्याख्या विषयवैशद्यकरीतीहापि संगृह्यते । तथाहि—"केचिद् ब्राह्मणादिशब्दैस्तपोजातिश्रुतादिसमुदायो विना विकल्पसमुच्चयाभ्यामभिधीयत इत्याहुर्यथा वनादिशब्दैर्धवादय इति । तथाहि—वनमित्युक्ते धवो वा खदिरो वा पलाशो वेति न विकल्पेन प्रतीतिर्भवति, नापि धवश्च खदिरश्च पलाशश्चेति समुच्चयेन; अपि तु वनत्वेन रूपेण सामान्येन प्रतीयन्ते धवादयः । तथा ब्राह्मण इत्युक्ते तपो वा जातिर्वा श्रुतं वा, तपश्च जातिश्च श्रुतञ्चेति न प्रतिपत्तिर्भवति । अपि तु साकल्येन संबन्ध्यन्तरव्यवच्छिन्नास्तपःप्रभृतयः संहताः प्रतीयन्त इति । तत्र बहुष्वनियतैकसमुदायिभेदावधारणं विकल्पः । एकत्र युगपदभिसंबध्यमानस्य नियतस्यानेकस्य स्वरूपभेदावधारणं समुच्चयः ।

अन्विद्यमानौ विकल्पसमुच्चयौ यस्य स तथोक्तः" इति। अथ जातिगुणक्रियात्मकस्यार्थस्य व्यक्तावसत्यभूतः संसर्ग एव शब्दार्थ इति पञ्चमः पक्षः। तदुक्तं हरिणा–

असत्यो वाऽपि संसर्गः शब्दार्थः कैश्चिदिष्यते। इति।

( वा० प० २। १२६ )

अयं भावः–घटादीनां घटत्वजात्यादिसंसर्गो घटादिशब्दैरुच्यत इति केचिदिच्छन्ति। घटादिपदार्थव्यतिरेकेण च घटत्वजात्यादिसंसर्गस्य प्रमाणेनानुपलम्भात् स चासत्यभूत एवोच्यते। जातिर्हि अपोहातिरिक्ता वास्तवी बौद्धैर्न मन्यते, अद्वैतिभिरपि जातिर्नाभ्युपेयते। जातिगुणक्रियासमूह एव च द्रव्यमिति सांख्याः। एवञ्च घटादिव्यक्तौ जात्यादिसंसर्गोऽसत्यभूत एवोच्यते घटादिशब्दैः। तस्मात् तस्य संसर्गस्याश्रयीभूतो घटादिपदार्थः स्वलक्षण एव सत्यभूत इति तेषां हृदयमिति। अथ सत्यो यो व्यक्तिरूपः पदार्थः स एवासत्यैर्जात्यादिभिरुपाधिभिः ( व्यावर्तकधर्मैः ) विचित्रैः स्वसंसर्गेण विचित्रीकृतः ( असत्योपाधिविशिष्टं द्रव्यम् ) शब्दवाच्य इति षष्ठः पक्षः। तदुक्तं हरिणा—

असत्योपाधि यत् सत्यं तद्वा शब्दनिबन्धनम्। इति।

( वा० प० २। १२७ )

अत्र शब्दनिबन्धनपदे षष्ठ्यर्थे बहुव्रीहिः। निबन्धनशब्दो ज्ञापकनिमित्तपरः। अथवा शब्दस्य स्वरूपमेवाभिधेयमिति सप्तमः पक्षः। तदुक्तं हरिणा—

शब्दो वाऽप्यभिजल्पत्वमागतो याति वाच्यताम्। इति।

( वा० प० २। १२७ )

अभिजल्पपदे कर्मणि घञ्। शब्दार्थयोः परस्पराध्यासरूपाभिजल्पविषयीभूतं शब्दस्वरूपमेवाकृत्यधिकरणन्यायेन प्रवृत्तिनिमित्ततया शब्दस्य वाच्यमित्येतदर्थः। अभिजल्पस्वरूपञ्चोक्तं हरिणा—

सोऽयमित्यभिसंबन्धाद् रूपमेकीकृतं यदा।
शब्दस्यार्थेन तं शब्दमभिजल्पं प्रचक्षते॥ इति।

( वा० प० २। १२८ )

केचित्तु—अर्थेषु न स्वज्ञानानुकूला शक्तिः पृथगस्ति, किन्तु शब्दाधीनेति स्थिते, यथा ते शब्दैर्विधीयन्ते साध्यरूपतया वा सिद्धरूपतया वा तथैवावगम्यन्त इति स्वमाहात्म्योपस्थापित एव ( स्वशक्त्युपस्थापित एव ) शब्दार्थ इत्यष्टमः पक्ष इत्याहुः।

केचित्तु सर्वशक्तिरर्थो व्यवस्थितः। यथा घटपदार्थे घटनक्रियाज्ञानानुकूलशक्तिर्घटत्व-जातिज्ञानानुकूलशक्तिश्चेति, तथा कलसपदार्थे केन जलेन लसतीति व्युत्पत्त्या जलकरणकशोभाश्रयत्वज्ञानानुकूला शक्तिश्चेति। यद्वा घटपदार्थे स्वगतजातिगुणक्रियाज्ञानानुकूलाः शक्तयः सन्तीत्येवं सर्वशक्तित्वमर्थस्य तस्य प्रतिनियतशक्त्याऽभिधानं तेन तेन शब्देनेति ( घटशब्देन, जलशब्देन, नीलशब्देनेति ) नवमं पक्षमिच्छन्ति। तदिदं पक्षद्वयं दर्शितं हरिणा—

अशक्तेः सर्वशक्तेर्वा शब्दैरेव प्रकल्पिता।
एकस्यार्थस्य नियता क्रियादिपरिकल्पना॥ इति।

( वा० प० २। १३१ )

अथवा बुद्ध्युपारूढ एव शब्दस्यार्थो न बाह्य इति दशमः पक्षः। तदुक्तं हरिणा—

यो वाऽर्थो बुद्धिविषयो बाह्यवस्तुनिबन्धनः।
स बाह्यवस्त्विति ज्ञातः शब्दार्थः कैश्चिदिष्यते॥ इति।

( वा० प० २। १३२ )

अयं भावः—शब्दो हि ज्ञानरूपतया बुद्ध्युपारूढ आभ्यन्तरः, अविकल्पोऽपि वर्णपदाद्यानुपूर्वीमत्त्वेन पदत्वेन वाक्यत्वेन च विकल्प्यमानतया वैकल्पिकः। अतस्तस्यार्थोऽप्येवंभूत एव वाच्यः। सामानाधिकरण्ये हि वाच्यवाचकभावादिसंबन्धसंभवो न तु वैयधिकरण्य इति। तथा च शब्दस्यार्थोऽपि संस्काररूपेण बुद्ध्युपारूढ इत्याभ्यन्तरो न तु बाह्यः। किन्त्वबाह्यत्वेऽपि बाह्यवस्तुनिबन्धनः, बाह्यं वस्तु घटादिकं संस्काररूपेऽत एवाविकल्पे आभ्यन्तरे घटे घटाद्याकारविकल्पजननद्वारेण निबन्धनं घटाद्याकारवत्ताज्ञापकं निमित्तं यस्येति स तथाभूतः। इत्येवमर्थोऽपि वैकल्पिको विकल्पज्ञानगोचरत्वात्। विकल्पश्चात्र कल्पनात्मकं ज्ञानम्। स चार्थो भ्रमवशाद् घटादिबाह्यदृश्यविकल्पैकाकारेणाबहीरूपोऽपि बहीरूपतयाऽध्यस्तः, अध्यस्तमेव वस्त्ववगच्छामि शब्दादित्यनुभवबलाच्छब्दनिमित्तकः ( शब्दज्ञाप्यः ) इति शब्दार्थ इष्यत इति।

अत्रास्य श्लोकस्य तत्त्वसंग्रहपञ्जिकागता व्याख्या सङ्क्षिप्य लिख्यते। "बुद्धिविषय इति। बुद्धौ विपरिवर्तमानः, बुद्धिस्थ इति यावत्। बाह्यवस्तुनिबन्धन इति। सदसद् बाह्यं वस्तुनिबन्धनमक्षरचिह्नस्थानीयं स्वरूपमुपदर्शयितुं प्रक्रम्यते यस्य स बाह्यवस्तुनिबन्धनः। बाह्यं वस्त्विति ज्ञात इति। बुद्धिरूपत्वेनाविर्भावितो बाह्यतया व्यवसित इत्यर्थः। तथाहि—यावद् बुद्धिरूपमर्थेष्वप्रत्यस्तं बुद्धिरूपमेवेति तत्त्वभावनया गृह्यते, तावत् तस्य शब्दार्थत्वं नावसीयते, तत्र क्रियाविशेषसंबन्धाभावात्। नहि गामानय, दधि खादेत्यादिकाः क्रियास्तादृशि बुद्धिरूपे

क्रियायोगसम्भवी चार्थः शब्दैरभिधीयते। अतो बुद्धिरूपतया गृहीतोऽसौ न शब्दार्थः। यदा तु बाह्यवस्तुनि प्रत्यस्तो भवति, तदा तस्मिन् प्रतिपत्ता बाह्यतया विपर्यस्तः क्रियासाधनसामर्थ्यं तस्य मन्यत इति भवति शब्दार्थः'' इति।

अथ केषाञ्चिच्छब्दानामाकारविशेषवानर्थः, केषाञ्चित्तु तद्रहितः। तद् यथा—गवादिशब्दानामाकारविशेषवानर्थः, अपूर्वप्रभृतिशब्दानां त्वपरामृष्टाकारविशेषं संविन्मात्रमर्थः। तत्रायं विवेकः—बौद्ध एवार्थः शब्दार्थः। तत्र येषां शब्दार्थानां बाह्य आकारोऽस्ति तेषु बौद्धेषु बुद्धिमात्रस्वरूपेष्वर्थेषु बाह्याकारसमारोपः। येषां तु शब्दार्थानां बाह्य आकारो नास्ति तेषां त्वाकाररहितं संविन्मात्रं स्वरूपमित्येकादशः पक्षः। तदुक्तं हरिणा—

आकारवन्तः संवेद्या व्यक्तस्मृतिनिबन्धनाः।
ये ते प्रत्यवभासन्ते संविन्मात्रं त्वतोऽन्यथा॥ इति।
(वा. प. २। १३३)

केचित्तु—येषां पुरुषाणां यस्मिन्नर्थे यादृशी वासना प्रतिनियता, यथा कम्बुग्रीवादिमान् घटपदार्थ इति, घटत्वजातिमान् घटपदार्थ इति, पृथुबुध्नोदरादिमान् घटपदार्थ इति, तेषां पुरुषाणां तादृशवासनावशेनैव तादृशः प्रतिनियताकारोऽर्थः शब्दादभिधीयते प्रतीयते च। यथोपनिषत्सु श्रूयते। द द द इति—ब्रह्मणा प्रतिबोधिता देवासुरमानवाः स्वस्ववासनानुसारमेवैकस्मादेव दशब्दाद् यथाक्रमं दमध्वं दयध्वं दद्ध्वमिति प्रतिपन्नाः। देवा हि इन्द्रियार्थलोलुपाः, असुराश्च हिंसाप्रियास्तत्पराश्च। मानवास्त्वर्थलुब्धास्तत्संग्रहपरा इति। तत्वतस्तु कश्चिदपि नियतोऽर्थो न शब्दादभिधीयत इति द्वादशं पक्षमाहुः। तदुक्तं हरिणा—

यथेन्द्रियं सन्निपतद् वैचित्र्येणोपदर्शकम्।
तथैव शब्दादर्थस्य प्रतिपत्तिरनेकधा॥
वक्त्राऽन्यथैव प्रक्रान्तो भिन्नेषु प्रतिपत्तृषु।
स्वप्रत्ययानुसारेण शब्दार्थः प्रविभज्यते॥ इति।
(वा. प. २। १३४-३५)

तस्मात् प्रत्यक्षमप्यर्थं विद्वानीक्षेत युक्तितः।
न दर्शनस्य प्रामाण्याद् दृश्यमर्थं प्रकल्पयेत्॥
असमाख्येयतत्त्वानामर्थानां लौकिकैर्यथा।
व्यवहारे समाख्यानं तत् प्राज्ञो न विकल्पयेत्॥ इति।
(वा. प. २। १४१-४२)

एवं प्रासङ्गिकं शब्दार्थस्वरूपवर्णनं परिसमाप्य वैयाकरणाभिमतं प्रतिभास्वरूपमेव वाक्यार्थत्वेन पूर्वोपक्रान्तं प्रस्तूयते। तदुक्तं हरिणा--

विच्छेदग्रहणेऽर्थानां प्रतिभाऽन्यैव जायते।
वाक्यार्थ इति तामाहुः पदार्थैरुपपादिताम्॥ इति।
(वा. प. २। १४३)

सा च पदेभ्यो विच्छिन्नेभ्यो विच्छिन्नपदार्थबुद्ध्यनन्तरं पदार्थैरभिव्यञ्जिता वाक्यार्थत्वेन वैयाकरणैरुक्ता प्रतिभोपजायमानाऽप्यन्यान् प्रति कथञ्चिदपि 'इदं तत्' इत्याख्यातुमशक्या।

किञ्च सा प्रतिभा अन्यान् प्रत्यनाख्येयत्वेऽपि प्रत्यात्मवृत्तिः स्वानुभवसिद्धेति नापह्नोतुं शक्यते। किञ्च सा प्रतिभा स्वसंवेदनसमये स्वकर्त्राऽपि प्रतिपत्त्राऽपि नियतेन रूपेण न निरूपयितुं शक्यते, किमुतान्यैरिति सर्वस्य स्वसंवेदनसिद्धाऽपि साऽन्यान् प्रत्यनाख्येयैवेति दृश्यते। युज्यते चैवम्। तथा हि--द्राक्षामधूकसितशर्करादीनां प्रत्यात्मसिद्धा अपि माधुर्यविशेषा अन्यान् प्रति निरूपयितुं न शक्यन्त इति। इदं तदिति विशेषधर्मपुरस्कारेण प्रतिभायाः स्वरूपतोऽनिर्देश्यत्वेऽपि सा फलमुखेनाश्रयमुखेनाभिव्यञ्जकमुखेन च निरूपयितुं शक्यत एव। तद्यथा--वह्निनिष्ठा शक्तिरतीन्द्रियाऽनिर्देश्याऽपि फलमुखेनाश्रयमुखेन च निर्दिश्यते। वह्नौ दाहानुकूला शक्तिरिति। अभिव्यञ्जकेन च निरूप्यते। तद्यथा--प्रतिबन्धकमण्यादिसमवधानेऽपि य उत्तेजकेन मण्यादिनाऽभिव्यज्यते स वह्नेर्धर्मविशेषः शक्तिरिति। ताञ्च प्रतिभां न किञ्चित् प्राणिमात्रं व्यवहारेऽतिवर्तते। यतः सर्वोऽपि प्राणिमात्रस्येतिकर्तव्यतारूपो व्यवहारः प्रतिभामूलक एव। सा च प्रतिभेदानीन्तनी प्राक्तनी च। तत्रेदानीन्तनी मनुष्याणां सङ्केतग्रहसहकृतेन शब्देन कदाचिद् व्यवहारकाले जन्यते। बहुशास्त्रश्रवणाभ्यासेन वा साक्षाज्जनिता। प्राक्तनी बालानां तिरश्चाञ्च गजवाजिप्रभृतीनाम्, प्राक्तनभावनासमुपजातप्रतिभावशेनैवाशिक्षिता अपि बालाः स्ववयोऽनुरूपं वयस्यैः सह व्यवहरन्ति, गजवाजिप्रभृतयश्च स्वजात्युचितं चेष्टन्त इति। द्विविधाऽपि सा कवित्वहेतुः कवीनाम्। तदुक्तं काव्यप्रकाशे--

शक्तिर्निपुणता लोककाव्यशास्त्राद्यवेक्षणात्।
काव्यज्ञशिक्षयाऽभ्यास इति हेतुस्तदुद्भवे॥ इति।
(का० प्र० १।३)

अत्र द्विविधाऽपि शक्तिः प्रतिभैवेति व्याख्यातं प्रदीपे। तदुक्तं हरिणा--

साक्षाच्छब्देन जनिता भावनानुगमेन वा।
इतिकर्त्तव्यतायां तां न कश्चिदतिवर्तते॥
(वा० प० २। १४६)

प्रमाणत्वेन तां लोकः सर्वः समनुपश्यति ।
समारम्भाः प्रतीयन्ते तिरश्चामपि तद्वशात् ॥ इति ।

( वा० प० २ । १४७ )

सिद्धैव चेयं सर्वस्य प्रतिभेति, जन्मान्तराभ्यासहेतुकेयमिति चोपपादयितुमुक्तं हरिणा—

यथा द्रव्यविशेषाणां परिपाकैरयत्नजाः ।
मदादिशक्तयो दृष्टाः प्रतिभास्तद्वतां तथा ॥
स्वरवृत्तिं विकुरुते मधौ पुंस्कोकिलस्य कः ।
जन्त्वादयः कुलायादिकरणे केन शिक्षिताः ॥
आहारप्रीत्यपद्वेषप्लवनादिक्रियासु कः ।
जात्यन्वयप्रसिद्धासु प्रयोक्ता मृगपक्षिणाम् ॥ इति ।

( वा० प० २ । १४८-५० )

तत्र तृतीयस्यायमर्थः—मूषको मार्जारस्याहार इति मार्जारः केन शिक्षितः ? शुनः स्वामिनि प्रीतिः केन शिक्षिता ? मूषकमार्जारयोः, गोव्याघ्रयोः, अहिनकुलयोः, अश्वमहिषयोश्च परस्परमपद्वेषः केन प्रयुक्तः ? गोमहिष्यादयो जले प्लवनक्रियायां केन शिक्षिताः ? एते चाहारादयस्तिरश्चां जातिप्रसिद्धाः केचन, केचित्त्वन्वयप्रसिद्धा इति । अन्वयोऽत्र कुलम् । पशुत्वतिर्यक्त्वादिव्याप्याश्वत्वादिरूपा जातिर्वा । यद्वा जातिरत्र सामान्यधर्मः पशुत्वादिरूपः । अन्वयो विशेषधर्मः । तत्राहारप्रीत्यपद्वेषा मृगपक्षिणामन्वयप्रसिद्धाः, प्लवनादिक्रियास्तु जातिप्रसिद्धाः । प्रतिप्राण्याहारादिक्रिया नियताऽनादिप्रतिभावशादेव लोके प्रसिद्धेति बोद्धव्यम् । प्रतिभायाश्चासत्तिविप्रकर्षाभ्यां शब्द एव मूलम् । तदुक्तं हरिणा—

भावनानुगतादेतदागमादेव जायते ।
आसत्तिविप्रकर्षाभ्यामागमस्तु विशिष्यते ॥ इति ।

( वा० प० २ । १५१ )

तत्रासत्तिः सन्निधिरस्मिन् जन्मनि, विप्रकर्षो दूरत्वम्, जन्मान्तर इति । निमित्तभेदेन प्रतिभायाः षाड्विध्यं च दर्शितं हरिणा—

स्वभावचरणाभ्यासयोगाद् दृष्टोपपादिताम् ।
विशिष्टोपहिताञ्चेति प्रतिभां षड्विधां विदुः ॥ इति ।

( वा० प० २ । १५२ )

अथ भावः—काचित् स्वभावहेतुका प्रतिभा। यथा कपेः शाखाप्लवनादिषु। यथा वा परस्याः प्रकृतेरव्यक्तरूपायाः प्रथमं सत्तामात्रस्वरूपमात्मानं महान्तं प्रत्यानुगुण्यं स्वाभाविकम्। स्वभावत एव हि परस्याः प्रकृतेर्महदाकारेण परिणामानुगुण्यम्, सैव प्रतिभा। सुषुप्तावस्थस्येव पुरुषस्य प्रबोधानुगुण्यं प्रतिभारूपम्। निद्राया अपि तमःपरिणामरूपायाः परमानन्दरूपफल-सत्तामात्रं प्रत्यानुगुण्यं प्रतिभैव। चरणनिमित्ता काचित् प्रतिभा। चरणमत्र सदाचारः। शास्त्रविहितं तपः स्वाध्यायादिकं वा। तद्यथा—चरणेनैवावधृतभूतभविष्यद्वर्तमानविषयक-प्रकाश्यविशेषाणां वसिष्ठादीनां प्रतिभा।

अभ्यासनिमित्ता काचित् प्रतिभा। तद्यथा—कूपतटाकादिखनकानां कूपतटाकादि-खननाभ्यासनिमित्तिका प्रतिभा। अभ्यासेनैव हिते क्षितौ तिरोहिता जलनाडीः परिचिन्वन्ति। अत्र कूपादिखाते जलं भविष्यति, अत्र नेति।

काचित् प्रतिभा योगनिमित्ता। तद्यथा—योगिनामव्यभिचारेण पराभिप्रायज्ञानादिषु।

तथा काचिददृष्टनिमित्ता। तद्यथा-रक्षःपिशाचादीनां परकायप्रवेशान्तर्धानादिषु प्रतिभा।

काचिद्विशिष्टैस्तपोयोगादिसिद्धिसम्पन्नैरुपहिता (तत्कालसन्निधापिता)। तद्यथा—भारतयुद्धावसरे बहुदेशव्यापियुद्धवृत्तसम्यग्दर्शनाय संजयादीनां कृष्णद्वैपायनादिभिरुपहिता प्रतिभा। एवं प्रतिभा बहुविधाऽपि सर्वैवागमिकवाक्यनिबन्धना। व्यवहारे शास्त्रीयसाम्प्रदायिक-वाक्यमूलकलौकिकवाक्यप्रतिपाद्या चेति। एवमखण्डेऽपि वाक्येऽभ्युपगते पदपदार्थप्रविभाग-मन्तरेण व्यवहारो न निर्वहतीति पदार्थः सामान्येन मतभेदप्रदर्शनपूर्वकं निर्णीतः।

इदानीं मुख्यनान्तरीयकविभागेन पदार्थविचार उपक्रम्यते। यथाऽऽह हरिः—

यथा संयोगिभिर्द्रव्यैर्लक्षितेऽर्थे प्रयुज्यते।
गोशब्दो न त्वसौ तेषां विशेषाणां प्रकाशकः॥
आकारवर्णावयवैः संसृष्टेषु गवादिषु।
शब्दः प्रवर्तमानोऽपि न तानङ्गीकरोत्यसौ॥ इति।

(वा० प० २।१५३-५४)

अयमर्थः—यथा गोशब्दः स्वार्थसंयोगिभिर्द्रव्यैर्मणिघण्टिकापादुकादिभिर्गले बद्धैर्लक्षिते (उपलक्षणत्वेन विज्ञापितेऽर्थे) गवि गोत्वे वा प्रयुज्यते। तु = किन्तु. असौ = गोशब्दः, तेषां मण्यादीनां विशेषाणां न प्रकाशकः, किन्तु गोव्यक्तेस्तद्गतजातेरेव वा प्रकाशक इति प्रथमपद्यार्थः। द्वितीयपद्यार्थस्तु, आकारेण = संस्थानेन, वर्णेन = शुक्लत्वादिना, अवयवैः- = सास्नालाङ्गूलककुदखुरविषाणैः, संसृष्टेषु = संबद्धेषु गवादिष्वर्थेषु प्रवर्तमानोऽपि

गोशब्दस्तान् आकारवर्णावयवानन्तरङ्गानपि वाच्यत्वेन नाङ्गीकरोति, किमुत बाह्यान् मण्यादीन् विशेषान्। अत्र गोशब्दस्य व्यक्तिर्जातिर्विशिष्टमुभयं वा मुख्योऽर्थोऽभिप्रेतः। मणिघण्टिकादयस्तु बहिरङ्गाः संयोगिनोऽर्थाः, आकारवर्णादयश्चान्तरङ्गा अर्था नान्तरीयका इति नाभिधेयाः, किन्त्वभिधेयस्योपलक्षणत्वेन स्थिता इति।

नन्वाकारादयो यदि न शब्दाभिधेयाः, तर्ह्याकारादिवाचकानां स्थूलह्रस्वकर्बुरशबलादीनां शब्दानां कथमाकारादिवाचकत्वं स्वीक्रियत इत्याशङ्क्य समाहितं हरिणा—

संस्थानवर्णावयवैर्विशिष्टे यः प्रयुज्यते।
शब्दो न तस्यावयवे प्रवृत्तिरुपलभ्यते॥ इति।

(वा० प० २।१५५)

अस्यार्थः—संस्थानेन वर्णेनावयवैर्वा विशिष्टे यः शब्दः प्रयुज्यते, स तत्तद्विशिष्टस्यैव वाचकः, तत्र प्रयुज्यमानत्वात्, संस्थानादीनामवयवेषु तु न तस्य शब्दस्य प्रवृत्तिरुपलभ्यते यतोऽतस्तदवयवो नाभिधीयत इति। तदयं फलितार्थः—संस्थानवर्णावयवविशिष्टानां वाचकैस्तत्तच्छब्दैराकारवर्णावयवा यथायथमुच्यन्त एव। यथा परिमण्डलः, चित्रः शतमिति न वयं सर्वत्र संस्थानवर्णावयवानामप्रतीतिं ब्रूमः, किन्तु यच्छब्दयत्प्रयोजकम् (प्रवृत्तिनिमित्तम्), तदेव तस्य शब्दस्य वाच्यम्, अन्यत्तु नान्तरीयकतया प्रतीयत इति ब्रूमः।

एवञ्चाकारादिवाचकशब्दानां नावयवमात्रे प्रवृत्तिरङ्गीकार्या, नान्तरीयकतया प्रतीयमानत्वेऽप्यवाच्यत्वात्। अतः परिमण्डलादिशब्दैरर्थस्य विशेषा उच्यन्ते, गोघटादिशब्दैस्तु विशेषा नान्तरीयकतया प्रतीयमाना अपि नोच्यन्ते, किन्तु गोत्वघटत्वादिरूपं सामान्यमात्रमेवेति व्यवस्थित एव पन्थाः न त्वाकारादयो विशेषाः सर्वथाऽवाच्या एवेति।

अयं भावः—संस्थानविशिष्टोपक्रमः शब्दः परिमण्डलो दीर्घश्चतुरस्र इत्येतैः शब्दैस्तत्तदाकारविशिष्टा एवाभिधीयन्ते, न तु तत्तदाकारावयवाः। तथा मुष्टिग्रन्थिसन्धिसक्तकुण्डलकादयस्तत्तदाकारविशिष्टवाचकास्तदवयवेषु न प्रयुज्यन्ते। वर्णशब्दानां चित्रः, कल्माषः, सारङ्ग इत्येवमादीनां तदवयवेषु शुक्लनीलादिष्वप्रवृत्तिः। अवयवविशिष्टवाचकशब्देन—शतम्, सहस्रम्, प्रस्थः, द्रोणः, मासः, संवत्सर इत्येवमादिना यथायथं पञ्चाशदादयस्तत्तदवयवा नाभिधीयन्ते।

केचिदाहुः—गृह्यमाणेऽवयवे दन्तशृङ्गखुरादिरूपे कदाचित् पूर्वदृष्टे खुरादावपि केवलेऽयं गौरिति प्रयुज्यत एव। तथा वृकावयवमात्रदर्शनेऽपि वृक इति, अथवा ग्राम्यसूकरावयवमात्रदर्शनेऽपि ग्राम्यसूकर इति, अवयवेऽपि विशेषे प्रयुज्यत एव गोशब्दः। यतः कश्चिदवयवोऽनेन

प्रयोक्त्रा लक्ष्यते प्रयोगकाले तदानीम्, न तु सकलावयवविशिष्टोऽवयवीति । तदेतन्न्यायापेतं दर्शनमित्यपरे मन्यन्ते । तथाहि—यदि जातिमात्रवाची स गोशब्दस्तदा स जातिमेव प्रत्याययति । किं तत्र जातेरुपव्यञ्जनैरवयवैर्वाच्यत्वेन प्रतीयमानैः प्रयोजनम्? अतस्तत्र दृष्टावयवव्यङ्ग्ये गोत्वरूपे सामान्य एव गोशब्दप्रयोगः, न त्ववयवरूपे विशेष इति । कथं तर्हीदं भाष्यं समर्थ्यते—समुदायेषु प्रवृत्ताः शब्दा अवयवेष्वपि वर्तन्ते, तैलं भुक्तम्, घृतं भुक्तमिति? तदिदमेवं समाहितं हरिणा—

संस्कारादिपरिच्छिन्ने तैलादौ यो व्यवस्थितः ।
आहैकदेशं तत्त्वेन तस्यावयववर्तिता ॥ इति ।
( वा० प० २।१५७ )

एतदुक्तं भवति—संस्कृते उपहते वा प्रयुज्यमानाः, यत्तत्काकेनोपहतं घृतं तद्देवदत्तेन भुक्तमिति । यदातुरार्थं संस्कृतं घृतं तैलं वा तद्देवदत्तेन पीतमिति, न ते जातिशब्दाः, किन्तु तत्सदृशा एव ते । यतो नियतपरिमाणाभिधायिनः, अतो जात्यध्यारोपमूलकसमुदायाध्यारोपेण तैलादिशब्दास्तदेकदेशवाचिन उच्यन्त इति । संस्कृते उपहते वा तैले जात्यध्यारोपस्तु द्रव्यान्तरसंपर्कात् स्वीक्रियते । वस्तुतस्तु तत्र तैलादिपदस्यैकदेशे लक्षणा, न तु शक्तिरिति । तदुक्तं हरिणा—

संस्कारादुपघाताद् वा वृत्तेऽक्तपरिमाणके ।
तैलादौ जातिशब्दोऽत्र समत्वादवगम्यते ॥ इति ।
( वा० प० ३, वृ० स० ४८६ )

तथा चायमेतत्प्रकरणस्य फलितोऽर्थः—यद् यच्छब्दस्य प्रवृत्तिनिमित्तम्, तदेव तस्य वाच्यम् । यथा गोशब्दस्य गोत्वम् । अन्ये तु रोमशफादयो नान्तरीयकतया प्रतीयमाना अपि न शब्दवाच्या इति । तदिदं सर्वमुक्तं हरिणा—

येनार्थेनाभिसंबद्धमभिधानं प्रयुज्यते ।
तदर्थापगमे तस्य प्रयोगो विनिवर्तते ॥
यांस्तु सम्भविनो धर्मानन्तर्णीय प्रयुज्यते ।
शब्दस्तेषां न सान्निध्यं नियमेन व्यपेक्षते ॥
यथा रोमशफादीनां व्यभिचारेऽपि दृश्यते ।
गोशब्दो न तथा जातेर्विप्रयोगे प्रवर्तते ॥

दुर्लभं कस्यचिल्लोके सर्वावयवदर्शनम् ।
कैश्चित्त्ववयवैर्दृष्टैरर्थः कृत्स्नोऽनुमीयते ॥ इति ।
( वा० प० २।१५८-६१ )

यथा कतिपयावयवदर्शनेन सकलार्थपरिच्छेदस्तत्रानुमानिक एव, न शाब्द इति सामान्यमेव शब्दार्थः, न व्यक्तिः। तथैव जातीगन्ध उत्पलगन्ध इति शब्दाद् जात्युत्पलयोरेकदेशस्य गन्धमात्रस्य निश्चयेन गन्धस्य नित्यसहचारिणां धर्मान्तराणां रूपरसस्पर्शादीनामवगमोऽप्यानुमानिक एव, न शाब्द इति जातीगन्ध उत्पलगन्ध इत्यादौ गन्धसहचारिणो रूपस्पर्शादयो न जातीगन्धादिपदार्था इत्येतदुक्तं हरिणा—

तथा जात्युत्पलादीनां गन्धेन सहचारिणाम् ।
नित्यसम्बन्धिनां दृष्टं गुणानामवधारणम् ॥
तस्मात् सम्भविनोऽर्थस्य शब्दात् संप्रत्यये सति ।
अदृष्टविप्रयोगोऽर्थः सम्बन्धित्वेन गम्यते ॥ इति ।
( वा० प० २।१६२-६३ )

अत्र गम्यत इत्यस्यानुमीयत इत्यर्थः ।

एवं नामपदस्यार्थं परिसमाप्येदानीं तस्यैव भागार्थविचारः प्रक्रम्यते। यथैव लोके वाक्यात् पदतदर्थप्रविभागेण व्यवहारः क्रियते, तथा पदादपि प्रकृतिप्रत्ययापोद्धारेण शास्त्रे भूयान् व्यवहारो दृश्यते। तत्र केचित् तावन्मन्यन्ते—सत्येवान्वयव्यतिरेके यावानेवान्वयव्यतिरेकाभ्यामर्थः समधिगम्यते तावानेवास्ति। तथा च पदे प्रकृत्यर्थः प्रत्ययार्थश्चास्ति, न तु ताभ्यामन्यः कश्चित् प्रकृतिप्रत्ययसमुदायरूपस्य पदस्यार्थः। स तु पदस्य समुदायार्थो विशिष्टरूपो वाक्य इवाशब्द आकाङ्क्षाभास्यः।

शब्दन्यायविदस्तु मन्यन्ते—पदे प्रकृतिप्रत्ययादयः शिष्टैः पाणिन्यादिभिर्बहुधा स्वबुद्धिपरिकल्पनेन समर्थिता एव, न तु वास्तवाः। तेषाञ्चार्थाः शास्त्रे तथाऽऽचार्यस्य शास्त्रक्रियाप्रवृत्तौ निमित्तभूताः शास्त्रीयव्यवहारनिर्वाहार्थं शास्त्रकृत्कल्पिताभ्यां व्यावहारिकाभ्यामन्वयव्यतिरेकाभ्यां कृतप्रविभागा एव शास्त्र आश्रीयन्ते। कथमिति चेत्, यतः प्रकृत्यर्थप्रत्ययार्थबुद्ध्योः समुदायार्थप्रतिपादनोपायमात्रत्वमेतत्समुदायार्थं प्रति तयोरन्वयव्यतिरेकप्रदर्शनस्य। सर्वथाऽपि लौकिकस्य समुदायार्थस्य प्रतिपत्तावियान् प्रकृत्यर्थः, इयांस्तु प्रत्ययार्थ इति भेदो नास्ति, लोकेऽप्रत्ययात्। तथाहि—केषाञ्चिन्मते स्वार्थद्रव्यलिङ्गमात्राभिधायिनी प्रकृतिः, संख्याकर्मादीनां वाचिका विभक्तयः। प्रातिपदिकार्थे संख्याकर्मादीनां विशेष्यतया विशेषणतया वा यथासंभवं प्रातिपदिकेनाभिधानं विकल्पेन विज्ञायते। संख्याकर्मादीनां मतभेदेन

प्रातिपदिकार्थत्वानियमात्। लिङ्गमपि केषाञ्चिन्मते टावादीनां द्योत्यम्, केषाञ्चिदभिधेयम्। द्योतनमपि द्विविधम्—अनाविर्भूताविर्भावनम्, अथवा द्वयोर्व्युदासप्रसङ्गेऽनभिप्रेतप्रकारान्तरव्युदासेन कस्यचिदेकस्यावधारणम्। तयोराद्यस्योदाहरणम्—तटस्तटी तटमिति। अत्र हि विसर्गेण ङीषाऽमादेशेन च प्रातिपदिकमात्रेणानाविर्भूतस्य लिङ्गस्याविर्भावनम्। द्वितीयस्य तूदाहरणम्—प्रतिष्ठते, उत्पुच्छयते, अभिमनायते इति। अत्र हि प्रथमे प्रयोगे प्रकर्षेण तिष्ठतीति, प्रस्थानं करोतीत्यर्थद्वयस्याप्यप्रतिषेधप्रसङ्गे आद्यार्थव्युदासेन द्वितीयार्थस्यैवावधारणम्। द्वितीयस्मिन् प्रयोगे पुच्छमूर्ध्वं करोतीति, गर्भं ग्राहयतीति चार्थद्वये प्राप्ते फलाभावादाद्यार्थत्यागे द्वितीयार्थस्यावधारणम्। तृतीयस्मिंस्तु प्रयोगेऽभिमुखमना इवाचरतीति, अनुकूल इवाचरतीति, उत्कण्ठित इवाचरतीत्यर्थेषु प्राप्तेष्वाद्यार्थपरित्यागात् प्रकरणवशेन द्वितीयार्थस्य तृतीयार्थस्य वाऽर्थस्यावधारणम्। तदप्यवधारणं प्रसिद्धप्रयोगाणाप्रसिद्धप्रयोगाणामवियुतप्रयोगाणां चेति। तत्राद्यस्योदाहरणम्—उपास्ते इति। अत्र हि सेवारूपेऽर्थे द्योत्येऽयं प्रयोगः प्रसिद्ध एव। प्रपचतीति द्वितीयस्योदाहरणम्। अत्र हि प्रपचतीत्यस्य प्रभूतं पचतीत्यर्थोऽप्रसिद्धः। प्रकर्षेण पचतीत्यर्थ एव प्रसिद्धः। न वियुतो वियुक्तः प्रयोगो येषां तेऽवियुतप्रयोगाः। यथा—अधीते, अध्येतीति। अत्रेङिकोर्धात्वोरध्युपसर्गस्य न व्यभिचारः। तदुक्तमभियुक्तैः—'इङिकावध्युपसर्गं न व्यभिचरतः' इति। अथवैकस्यैवार्थस्य प्रकृतिप्रत्ययाभ्यां सहाभिधानमेव, न तु केनचिदभिधानम्, केनचिद् द्योतनमिति। तद्यथा—यावकः, गोपायिता, ब्राह्मणाधीनम्, जुगुप्सते इति। अत्र यावशब्दोऽयमर्थमाह तमेवार्थं कन्प्रत्ययोऽप्याह, स्वार्थे कनो विधानात्। गोपायितेत्यत्र तु गुप्धातुः आयप्रत्ययश्चैकमेवार्थमभिधत्तः, स्वार्थे आयप्रत्ययविधानात्। ब्राह्मणाधीनमित्यत्राधिशब्दः खप्रत्ययश्चैकार्थाभिधायिनौ, स्वार्थे खप्रत्ययविधानात्। जुगुप्सत इत्यत्रापि प्रकृतिप्रत्ययावेकार्थाभिधायकावेव, स्वार्थेऽत्र सनो विधानादिति। अथवा संख्याविशिष्टस्यार्थस्याविभक्तावयवः प्रकृतिप्रत्ययसमुदायः संसृष्टानेकशक्तियुक्तोऽभिधायक इति तृतीयः पक्षो विभक्तीनां वाचकत्वद्योतकत्वपक्षौ प्रागुक्तावपेक्ष्य। अथवा संख्यायाः प्रातिपदिकार्थे उपलक्षणत्वात् पटादिपदप्रवृत्तिकाले संख्याभिधानेन विनैव शतादिशब्दप्रवृत्तिकाले तैस्तैरभिधीयमानैः संख्याविशेषैः सर्वत्रानभिधानात् काककण्ठवद्धवर्णकम्बलवदनित्यैरुपलक्षणीभूतैरुपलक्षिताः संख्यावन्तः पटादयोऽर्थाः स्वरूपभेदभिन्नैः प्रकृतिप्रत्ययसमुदायैरभिधीयन्त इति चतुर्थः पक्षः। तदेतदुक्तं सर्वं हरिणा—

वाचिका द्योतिका वा स्युर्द्वित्वादीनां विभक्तयः।
स्याद्वा संख्यावतोऽर्थस्य समुदायोऽभिधायकः॥

विना संख्याऽभिधानाद्वा संख्याभेदसमन्वितान् ।
अर्थान् स्वरूपभेदेन कांश्चिदाहुर्गवादयः ॥ इति ।

(वा० प० २ । १६४-६५ )

यत्राव्यभिचारेणान्वयव्यतिरेकावुपलभ्येते, तत्रैव प्रकृतिप्रत्ययार्थविभागव्यवस्थारूपो नियमः, न तु यत्राव्यभिचारेणान्वयव्यतिरेककल्पनाऽशक्या तस्मिन् विषये, तथा च भवतामित्यादावसति नुटि षष्ठ्यर्थदर्शनात् । अत्तीत्यादावसत्यपि शपि कर्तृसंख्यादिरूपार्थदर्शनाद् वृक्षाणां पचतीत्यादौ यथायथं नुटः शपश्च सहायकत्वमात्रं स्थापितम्, न तु पृथगर्थतेति (म० भा० १.३-६७ सू.) ।

तदेतदुक्तं हरिणा—

ये शब्दा नित्यसंबन्धा विवेके ज्ञातशक्तयः ।
अन्वयव्यतिरेकाभ्यां तेषामर्थो विभज्यते ॥
यत्र चाव्यभिचारेण तयोः शक्यं प्रकल्पनम् ।
नियमस्तत्र न त्वेवं नियमो नुट्शबादिषु ॥ इति ।

(वा० प० २ । १६६-६७ )

यत्र तु पृथगेव तयोः प्रकृतिप्रत्यययोरर्थवत्त्वं दृश्यते । तद्यथा—प्रत्ययरहितस्य किंशब्दस्य प्रयोगो नपुंसके किमिति । प्रकृतिरहितस्य वतुपः प्रयोगः—इयान्, इयत्, इयतीति । एवं केवलस्य प्रत्ययस्य प्रयोगः—व्यतिसे इति । केवलायाः प्रकृतेः प्रयोगः—अलेट् इति । तत्र पृथगर्थाभिधानमेवाङ्गीकार्यम्, न त्वन्यतरस्य द्योतकत्वमिति ।

यत्र त्वन्वयव्यतिरेकापेक्षायामपि क्रियमाणायां तद्व्यभिचारात् पृथगर्थता नोपलभ्यते, यथा कूपसूपयूपेषु ककारादिवर्णानां पृथगर्थता नोपलभ्यते, ककारसत्त्वे कूपार्थसत्त्वमित्यन्वयस्य कलशादौ व्यभिचारात्; तत्र वर्णानां पृथगर्थवत्त्वायापोद्धारो नाश्रयणीय इत्यवधेयम् । तदेतदप्युक्तं हरिणा—

सम्भवे वाऽभिधानस्य लक्षणं तु न कल्प्यते ।
आपेक्षिक्यो हि संसर्गे नियताः शब्दशक्तयः ॥
न कूपसूपयूपानामन्वयोऽर्थस्य दृश्यते ।
अतोऽर्थान्तरवाचित्वं संघातस्यैव गम्यते ॥ इति ।

( वा० प० २ । १६८-६९ )

तदेवं शक्याशक्यावन्वयव्यतिरेकावाश्रित्य प्रकृतिप्रत्ययापोद्धारेणान्वाख्यानं पदभागयोः कार्यमित्युक्तम्। तद्यथा—शक्यावन्वयव्यतिरेकौ भवति-भविष्यतीत्यादौ। अशक्यौ कृपादिषु, सर्वं नामधातुजमित्युक्तेः। अशक्यत्वञ्चात्र प्रकृतिप्रत्यययोः संमोहकृतं द्रष्टव्यम्। ततश्च तदन्वाख्यानं सनिमित्तमथ निर्निमित्तमेवेति विकल्प्य सनिमित्तमेव पदभागयोः पदस्य चान्वाख्यानं कार्यमित्युपपादयितुं प्रक्रम्यते।

शब्दानां व्युत्पत्तिक्रियासु जायमानासु प्रकृतिप्रत्ययकल्पनरूपाणि तत्तदर्थकल्पनरूपाणि चानुशासनानि कर्तृबुद्धिप्रत्युक्तेन व्याकरणभेदेन भिद्यन्ते। तद्यथा—वृत्त्लुटि 'तनिताडिभ्य उलच् तण्डश्च' इति उणादिसूत्रेण तण्डुलशब्दो व्युत्पाद्यते। शक्यो ह्यन्येभ्योऽपि धातुभ्यस्तण्डुलशब्दव्युत्पत्तिकर्मणि उलच्प्रत्ययो विधातुं तण्डादेशश्च कर्तुमिति। अत एवोक्तं हरिणा—

कैश्चिन्निर्वचनं भिन्नं गिरतेर्गर्जतेर्गमेः।
गवतेर्गदतेर्वाऽपि गौरित्यत्रानुदर्शितम्॥ इति।

(वा० प० २। १७४)

एवञ्च शब्दव्युत्पत्तिनिमित्तानां बहूनामर्थानां संभवे किञ्चिदेव निमित्तं व्याकरणे शब्दव्युत्पत्ताविष्यते। यथा गोशब्दव्युत्पत्तौ गमनम्। यत्र खलु शब्दव्युत्पत्तौ बहूनि निमित्तानि संभवन्ति, तत्रानैयत्येनावस्थितं किञ्चिदेव निमित्तमाश्रित्यान्वाख्यानं क्रियत इति व्युत्पत्तिनिमित्तेऽर्थेऽनास्था दर्शिता, प्रवृत्तिनिमित्तस्यैवार्थस्य नियतत्वात्। गोशब्दस्य हि शयानायामपि गवि प्रयोगो दृश्यत इति गोशब्दस्य गमनरूपं व्युत्पत्तिनिमित्तमनियतम्। गोत्वरूपं प्रवृत्तिनिमित्तं तु नियतम्। तदुक्तमभियुक्तैः—अन्यद्धि शब्दानां व्युत्पत्तिनिमित्तमन्यच्च प्रवृत्तिनिमित्तमिति।

अयं भावः—गोपदस्याभिधेयं द्विविधम्। लौकिकमलौकिकञ्च। एवं सर्वस्य पदस्य। तत्र गोपदस्य लौकिकोऽभिधेयः सास्नादिमान् भावः, अलौकिकस्तु गमनक्रियाविशिष्टस्तदुपलक्षितो वा। तत्र लौकिकस्याभिधेयस्याभेदेन विशेषणमुपलक्षणं वाऽलौकिकमर्थं व्युत्पत्तिनिमित्तमुपादायोपादाय निपातनेन लक्षणेन वा पाणिन्यादिभिराचार्यैः क्रियमाणेषु शब्दव्युत्पत्तिकर्मसु बहुधा भिन्नानि साधुविषयाण्यन्वाख्यानानि दृश्यन्ते। एवञ्च बहुधा भिन्नैरन्वाख्यानैरनेकशक्तियुक्तेऽर्थे प्रतीते या काचिन्निमित्तभावेनाश्रीयमाणा शक्तिः साधुत्वान्वाख्यानेऽङ्गत्वं प्रतिपद्यते। तद्यथा—वृत्त्लुटि तनिताडिभ्य उलच् तण्डश्च। शक्यो ह्यन्येभ्योऽपि धातुभ्यस्तण्डुलशब्दव्युत्पत्तिकर्मण्युलच् प्रययो विधातुं तण्डादेशश्च कर्तुमिति। अनियतनिमित्तकं शब्दानां साधुत्वान्वाख्यानमिति च बहुभिर्दृष्टान्तैः समर्थितं हरिणा—

वैरवासिष्ठगिरिशास्तथैकागारिकादयः ।
कैश्चित् कथञ्चिदाख्याता निमित्तावधिसङ्करैः ॥
यथा पथः समाख्यानं वृक्षवल्मीकपर्वतैः ।
अविरुद्धं गवादीनां भिन्नैश्च सहचारिभिः ॥ इति ।

( वा० प० २ । १७१-७२ )

किञ्चार्थस्य बहवोऽवस्थाभेदाः सन्ति, येन चान्वाख्यात्रा योऽवस्थाभेदः परिदृष्टः, तेनैवासौ तदन्वाख्यानं करोतीत्यपि दर्शितं हरिणा—

अन्यथा च समाख्यानमवस्थाभेददर्शिभिः ।
क्रियते किंशुकादीनामेकदेशावधारणात् ॥ इति ।

( वा० प० २ । १७३ )

अयं भावः—कश्चिदन्वाख्याता फलशून्यस्य पलाशवृक्षस्य किंशुकाभाववत्त्वावस्थां दृष्ट्वा तद्बोधकात् किंशुके न पलाशे इति, किंशुको न पलाशे इति वा वाक्यात् तदेकदेशं किंशुकशब्दं पृथक्कृत्य पलाशेऽन्वाचष्ट इति सर्वेषां पर्यायशब्दानां भिन्नमेव व्युत्पत्तिनिमित्तम् । प्रवृत्तिनिमित्तं त्वेकमेव सर्वपर्यायानुगतमिति । स्वस्वरूपमेव शब्दानां प्रवृत्तिनिमित्तमन्वाख्यानायोपादीयत इत्ययमपि पक्षो दर्शितो हरिणा -

गौरित्येव स्वरूपाद् वा गोशब्दो गोषु वर्तते ।
व्युत्पाद्यते न वा सर्वं कैश्चिच्चोभयथेष्यते ॥ इति ।

( वा० प० २ । १७५ )

अस्यार्थः, गौः=गोशब्दः, गौरित्येव हि=गोशब्दस्वरूपं प्रवृत्तिनिमित्तमादायैव हि, गवि वर्तते=प्रवर्तत इति । अतश्च स्वरूपमात्रप्रयुक्ताः सर्वे शब्दा इत्यव्युत्पत्तिपक्ष एवेति । एतदेवाभिप्रेत्योक्तम्—व्युत्पाद्यते न वा सर्वमिति । कैश्चित्तु शब्दस्वरूपं वाच्यञ्च व्युत्पत्तिनिमित्तमित्युच्यते तदभिप्रेत्योक्तम्—कैश्चिच्चोभयथेष्यत इति । एवं पक्षद्वयेऽपि सनिमित्तमन्वाख्यानम् । वाच्यरूपं निमित्तञ्च बहुधा कैश्चित् कथञ्चित् किञ्चिदुक्तम् ।

एवं स्वरूपं निमित्तमुभयमेव वा निमित्तमिति पक्षद्वयं दर्शितम् । तत्राद्यमौक्थिक्यानां मतम् । भाष्ये तु द्वावपि पक्षौ ( व्युत्पत्त्यव्युत्पत्तिपक्षौ ) एकस्मिन्नेकस्मिन् शब्द एव कार्यार्थमाश्रितौ । तद्यथा—शङ्खशब्देऽव्युत्पत्तिपक्ष आश्रितः, खस्येनादेशाभावाय । नप्त्रादिषु च व्युत्पत्तिपक्ष आश्रितो नप्त्रादिग्रहणस्य नियमार्थत्वोपपत्तय इति । कश्चिद्धि शास्त्रव्यवहारः परमार्थमेवा-

खण्डस्य पदस्यार्थं निश्चित्य व्यवतिष्ठते, ततोऽव्युत्पत्तिपक्षोऽवतरति। कश्चित्तु शास्त्रव्यवहारः साधुत्वबोधनायोपायं शास्त्रसमयमेव प्रकृतिप्रत्ययविभागान्वाख्यानरूपमपेक्षत इत्यतो व्युत्पत्ति-पक्षावतारः। तत्र शास्त्रगतः प्रागुक्तो व्यवहारोऽपरमार्थः। लोकेऽप्रत्ययाद् धातुप्रत्ययादिभेद-दर्शनञ्चापरमार्थमिति।

इदानीमिदं विचार्यते—किं प्रत्युच्चारणं भिन्नमेव रूपं शब्दस्य, आहोस्विदभिन्नमिति? यदि भिन्नमेव, तदा गमनम्, गरलम्, गज इत्यादिषु भिन्नेषु पदेषु गादीनां वर्णानां भिन्नत्वात् प्रत्युच्चारणमेकत्वेनाभिमतस्यापि गवादिशब्दस्य वर्णभेदाद् भेदेनैवोपादानं (ग्रहणम्=ज्ञानम्) प्राप्नोति। ततश्च गोशब्दस्य प्रत्युच्चारणं सारूप्येऽप्यानन्त्यादज्ञानेनान्वाख्यानस्याशक्यत्वमित्या-शङ्क्य समाहितं हरिणा—

सामान्येनोपदेशश्च शास्त्रे लघ्वर्थमाश्रितः।
जात्यन्तरवदस्यापि विशेषाः प्रतिपादकाः॥ इति।
(वा० प० २। १७६)

एतदुक्तं भवति—शब्दभेददर्शने भिन्नानां शब्दानां शब्दगतसामान्यसमाश्रयणेन लाघवादुपदेशः शास्त्रे क्रियते। ये तु विशेषा निर्दिश्यन्ते, ते शब्दगतस्य सामान्यस्यैवार्थगत-घटत्वादिसामान्यस्येव व्यञ्जका उच्यन्त इति। अग्नेर्ढगित्यादौ शब्दव्यक्तिरेका निर्दिश्यते। तया च शब्दगता जातिरभिव्यज्य बोध्यत इति सर्वेष्वग्निशब्देषु ढक्प्रत्ययः सिद्ध्यति। प्रत्यर्थं शब्दाभिनिवेश इति सिद्धान्तसमाश्रयणेनार्थभेदेन शब्दभेदः, क्वचित् त्वर्थैकत्वेऽपि शब्दभेद इति विभज्य दर्शितं हरिणा—

अर्थान्तरे च यद् वृत्तं तत्प्रकृत्यन्तरं विदुः।
तुल्यरूपं न तद्रूढावन्यस्मिन्ननुषज्यते॥
भिन्नाविजियजी धातू नियतौ विषयान्तरे।
कैश्चित् कथञ्चिदुद्दिष्टो चित्रं हि प्रतिपादनम्॥ इति।
(वा० प० २। १७७-७८)

अवस्थाभेदाश्रयेणापि शब्दप्रतिपादनं दृश्यते। तद्यथा—वैदूर्यस्य मणेः प्रभवावस्था-माश्रित्य विदूरात् प्रभवतीत्यर्थे वैदूर्यशब्दो व्युत्पाद्यते। अत एव बालवायशब्दस्य पर्वतवाचकस्य ञ्यप्रत्ययसंनियोगेन विदूरादेशः क्रियते। अथवा बालवायस्यैव विदूरमित्यप्रसिद्धं नाम। यथा वाराणस्या वणिङ्मात्रप्रसिद्धं नाम जित्वरीति। उभयथाऽपि विदूरात् प्रभवतीत्यर्थोपपत्तिः।

यतो नासौ मणिर्विदूरान्नगरात् प्रभवति। असौ तु बालवायात् प्रभवति, विदूरे तु केवलं शाणादिना संस्क्रियत इति सर्वमभिप्रेत्य चोक्तं हरिणा—

एवञ्च बालवायादि जित्वरीवदुपाचरेत्।
भेदाभेदाभ्युपगमे न विरोधोऽस्ति कश्चन ॥ इति।

( वा० प० २। १७६ )

बालवायविदूरशब्दौ पर्यायवाचकाविति भेदाभ्युपगमपक्षः। स्थान्यादेशभावस्तयोरित्यभेदाभ्युपगमपक्ष इति। ततो यदि व्यवस्थितेषु समुदायेषु शब्दभेदपक्षः, तदाऽडादीनां व्यवस्थार्थं धातूपसर्गयोः पृथक्त्वं कल्पनीयमिति चोक्तं तत्रैव हरिणा—

अडादीनां व्यवस्थार्थं पृथक्त्वेन प्रकल्पनम्।
धातूपसर्गयोः शास्त्रे धातुरेव तु तादृशः ॥
तथाहि संग्रामयतेः सोपसर्गाद् विधिः स्मृतः।
क्रियाविशेषाः संघातैः प्रक्रम्यन्ते तथाविधाः ॥ इति।

( वा० प० २। १८०-८१ )

एवमेव धातूपसर्गयोः कार्याणामन्तरङ्गत्वमुपपद्यते। एवञ्चानुभूयते इत्यत्र कर्मणि लकारः सिध्यतीति पूर्वं धातुरुपसर्गेण युज्यते, पश्चात् साधनेनेति पक्षोपपत्तिः। केषाञ्चित्तु पूर्वं धातुः साधनेन युज्यते, पश्चादुपसर्गेणेति पक्षः। तदुक्तम्—साधनं क्रियां निर्वर्तयति, तामुपसर्गो विशिनष्टीति। अस्मिंश्च पक्षद्वये पूर्वं धातुरुपसर्गेण युज्यते, पश्चात्साधनेनेति पक्ष एव युक्तः। तथाहि—'भूवादयो धातवः' ( १।३।१ ) इत्यस्य स्थाने क्रियावचनो धातुरिति भाष्योक्तन्यासे साधनसम्बन्धात् प्राक् क्रियाया अनिष्पत्त्या क्रियावचनत्वासिद्धौ यथाभाविनो धातोः संबन्धस्योपक्रम एव बुद्धया समाश्रयणेनोपक्रम एव धातुसंज्ञा तथा धातोर्भाविसाधनसम्बन्धात् प्रागेवोपक्रम एव विशिष्टक्रियावचनत्वोपपत्त्या अनुभूयते इत्यादौ कर्मणि लकारादिसिद्धिरिति। वाक्यात् पदापोद्धारे क्रियमाणे चत्वारि पदजातानि कल्प्यन्ते। तथा च यास्कवचनम्—चत्वारि पदजातानि नामाख्यातोपसर्गनिपाताश्चेति। तत्र नामाख्यातस्वरूपयोः प्राक् प्रदर्शितत्वादवसरप्राप्तमुपसर्गाणां स्वरूपं प्रदर्श्यते। तत्रोपसर्गाणां स्वरूपमनियतमेव, द्योतकत्वेन वाचकत्वेन संभूयार्थवाचकत्वप्रयुक्तेनानर्थक्येन चेति। तदुक्तं हरिणा—

स वाचको विशेषाणां संभवाद् द्योतकोऽपि वा।
शक्त्याधानाय धातोर्वा सहकारी प्रयुज्यते ॥ इति।

( वा० प० २। १८८ )

तत्रोपसर्गस्य द्योतकत्वमुक्तं हरिणा--

क्वचित् संभविनो भेदाः केवलैरभिदर्शिताः।
उवसर्गेण संबन्धे व्यज्यन्ते प्रपरादिना॥ इति।

(वा० प० २। १८७)

क्वचित् पचत्यादौ संभविनो भेदाः प्रकृष्टपाकादयः केवलैर्धातुभिरनिदर्शिता उपसर्गेण प्रपरादिना धातोः संबन्धे सति व्यज्यन्त इति योजना। वाचका अप्युपसर्गा दृश्यन्ते लोकव्यवहारे। तथाहि—तिष्ठतीत्यादौ स्थाधातोः केवलस्य गतिनिवृत्तिवाचकत्वम्। अनुभूयते, प्रतिष्ठते इत्यादौ प्रेण तूपसर्गेण गतिवाचकत्वं तस्यैव धातोर्व्यवस्थाप्यत इत्युपसर्गस्य प्रतिषेधवाचकत्वमिति। तदुक्तं हरिणा—धात्वर्थं बाधते कश्चिदिति। अत्रोपसर्गकर्तृको धात्वर्थस्य बाधो नाम धात्वर्थं प्रतिषिध्यान्यार्थव्यवस्थापनमिति। प्रतिष्ठते इत्यत्र स्थाधातोर्गतिवाचकत्वं प्रोपसर्गस्य वेति संशये धातोरेव तत्, उपसर्गस्य तु द्योतकत्वमित्यत्रानुमानं प्रमाणं दर्शितं हरिणा—

स्थादिभिः केवलैर्यच्च गमनादि तु गम्यते।
तत्रानुमानाद् द्विविधात् तद्धर्मा प्रादिरुच्यते॥ इति।

(वा० प० २। १८९)

अस्यार्थः—केवलैः स्थादिभिर्गतिनिवृत्तिवाचकत्वेन प्रसिद्धैः प्रतिष्ठते इत्यादावुपसर्ग--समभिव्याहारे धातूनामनेकार्थत्वप्रवादमाश्रित्य द्विविधादनुमानात् सामान्यतो दृष्टाद् विशेषतो दृष्टाच्च, गमनादि तु यच्च यदपि गम्यते—प्रतीयते। तत्र प्रतिष्ठते इत्यादौ गतिप्रतीतौ धातुरेव गतिवाचकः, प्रादिरुपसर्गस्तु तद्धर्मा=गमकत्वधर्मा (द्योतकत्वधर्मा) उच्यते—उपसर्गस्य द्योतकत्ववादिभिरिति शेष इति। तत्र विशेषतो दृष्टानुमानाकारश्च स्थाधातुरनेकार्थः, धातुत्वाद्, उभयवादिसम्मतानेकार्थयजत्यादिधातुवदिति। एतन्मूलकं सामान्यतो दृष्टानुमानञ्च। अन्येऽपि धातवोऽनेकार्थाः, धातुत्वात्, स्थाधातुवदिति। उपसर्गाणां संभूयार्थवाचकत्वप्रयुक्तमानर्थक्यमपि दर्शितं हरिणा—

अप्रयोगेऽधिपर्योश्च यावद् दृष्टं क्रियान्तरम्।
तस्याभिधायको धातुः सह ताभ्यामनर्थकः॥ इति।

(वा० प० २। १९०)

अस्यार्थः—कुतोऽध्यागच्छति, कुतः पर्यागच्छतीत्यादौ अधिपर्योरुपसर्गयोरप्रयोगे च = तु, यावत् क्रियान्तरम् = उपरिभावविशिष्टागमनापेक्षया, सर्वतो भावविशिष्टागमनापेक्षया वाऽन्या

क्रियाऽऽगमनरूपा, दृष्टम्—तस्याभिधायकस्तत्र धातुः। ताभ्याम्–अधिपरिभ्यां सह प्रयुज्यमानस्तु धातुरनर्थकः। एवमुपसर्गोऽप्यनर्थकः। तत्र विनिगमनाविरहेण संघातस्यैवार्थवत्त्वादिति। एवं स्वार्थिकप्रत्ययानां कन्नादीनामपि संभूयार्थवाचकत्वप्रयुक्तमानर्थक्यमेवाभ्युपेतं हरिणा—

तथैव स्वार्थिकाः केचित् संघातान्तरवृत्तयः।
अनर्थकेन संसृष्टाः प्रकृत्यर्थानुवादिनः॥ इति।

( वा० प० २। १६१ )

उपसर्गवन्निपातानामपि स्वरूपमनियतमेव द्योतकत्वेन वाचकत्वेन संभूयार्थवाचकत्वप्रयुक्तेनानर्थक्येन चेति। तदुक्तं हरिणा—

निपाता द्योतकाः केचित् पृथगर्थाभिधायिनः।
आगमा इव केऽपि स्युः संभूयार्थस्य वाचकाः॥ इति।

( वा० प० २। १६२ )

तत्र केषाञ्चिन्निपातानां द्योतकत्वं येषां पदान्तरसमभिव्याहारं विना प्रयोगो न भवति. यथा चादीनाम्। केषाञ्चित्तु वाचकत्वम्, येषां पदान्तरसमभिव्याहारापेक्षा न नियता। यथा—शश्वद्, युगपद्, एकपदे इत्यादीनाम्। तत्र येषां द्योतकत्वम्, तेषां द्योत्यार्थाभिधायिपदात् प्राक् पश्चाद्वा लौकिके प्रयोगेऽनियमः, वैदिके प्रयोगे तु नियम एव। वेदानुपूर्व्या नित्यत्वेन नियतत्वादिति। पदान्तरसमभिव्याहारं विनाऽप्रयुज्यमानानां चादीनामेव च मतभेदेन संभूयार्थवाचकत्वप्रयुक्तमानर्थक्यं वेदितव्यम्। चादीनां वाचकत्वपक्षे वृक्षस्य समुच्चय इतिवद् वृक्षस्य चेति षष्ठ्यापत्तिस्तु न। यथा चादीनां द्योतकत्वपक्षे प्लक्षश्चेत्यत्र प्लक्षपदस्य समुच्चितार्थाभिधायकत्वेऽपि षष्ठीप्रयोजकभेदानवगमात् ततो न षष्ठी, तथा तेषां वाचकत्वपक्षेऽपीति समाधानसंभवात्।

नन्वेवमपि यदि चादीनां सत्त्वभूतसमुच्चिताद्यर्थाभिधायकत्वम्, तदा 'चादयोऽसत्त्वे' इत्यसत्त्वे इति पर्युदासाद् निपातसंज्ञाया अभावे "स्वरादिनिपातमव्ययम्" ( १।१।३७ ) इति निपातसंज्ञापूर्विकाया अव्ययसंज्ञाया अप्यभावे विभक्तिलुकोऽभावाच्चादेरपि विभक्तेः श्रवणं प्राप्नोति; तस्मादयुक्तश्चादेः समुच्चिताद्यर्थाभिधायकत्वपक्ष इति चेन्न; चादेरसत्त्वभूतसमुच्चिताद्यर्थाभिधानं स्वभावः। यथाऽऽख्यातपदस्यासत्त्वभूतक्रियाऽभिधानं स्वभाव इत्यभ्युपगमात्। एवञ्च न चादेर्विभक्त्युत्पत्तिः, चाद्यर्थस्यासत्त्वभूतत्वेन लिङ्गसंख्यादिराहित्येन तद्बोधफलकविभक्त्युपपत्तेरनुपपत्तेरिति।

नन्वस्त्वेवं चादीनां समुच्चिताद्यर्थवाचकत्वम्, एवमपि दोषः। तथाहि–यथा स्वतन्त्राणां समुच्चिताद्यर्थाभिधायिनां समुच्चितादिपदानां विशेषणेन योगः शोभनः, कटेन समुच्चितः पट इति। तथा स्वसमभिव्याहृतपदपरतन्त्राणां चादिनिपातानामपि समुच्चिताद्यर्थाभिधायित्वाद् विशेषणेन योगः स्यात्। किञ्चायमस्ति मुनित्रयसम्मतोऽभ्युपगमः, गुणवचनानामाश्रयतो लिङ्गवचनानि भवन्तीति। अत्राश्रयो विशेष्यम्, विशेषणाश्रयत्वात्। विशेष्यमाश्रित्य लिङ्गानि संख्याश्च विशेषणानां भवन्तीत्यर्थः। ततश्च चादीनामसत्त्ववाचकत्वेन विभक्त्यभावात् तदर्थान्वये हरित शोभनञ्च वृक्ष इति प्राप्नोति। चार्थस्यासत्त्वभूतत्वेन लिङ्गसंख्यारहितत्वात् सामान्ये नपुंसकमापद्यते हरितशोभनपदयोः, चकारस्य च विशेषणयोग इति। एवञ्च चादीनां समुच्चिताद्यर्थभिधायित्वे विशेषणस्य तदन्वयित्वे च हरितं शोभनञ्च वृक्ष इति प्रयोगापत्तिः सुस्थितेत्याशङ्क्य समाहितं हरिणा—

समुच्चिताभिधानेऽपि विशिष्टार्थाभिधायिनाम्।
गुणैः पदानां संबन्धः परतन्त्रास्तु चादयः॥ इति।
(वा० प० २। १९६)

अस्यार्थः—स्वार्थबोधने नियमेन पदान्तरसमभिव्याहारापेक्षारूपपारतन्त्र्याभावरूपस्वातन्त्र्ये सति जात्यादिविशिष्टार्थाभिधायिनां पदानां गुणैर्विशेषणैः संबन्धो भवति। चादयस्तु समुच्चिताभिधानेऽपि––समुच्चिताभिधानेन विशिष्टार्थाभिधायित्वेऽपि परतन्त्राः। प्रागुक्तरूपपारतन्त्र्यवन्तो न स्वतन्त्रा इति तेषां स्वभावदर्शनान्न तेषां विशेषणैः संबन्ध इति न कश्चिद् दोषस्तेषां समुच्चयाभिधायित्वपक्ष इति।

अथ कर्मप्रवचनीया अपि पञ्चमं पदं वैयाकरणनिकाये कार्यार्थमभ्युपगतमितीदानीमेव तद् विचारयितुं प्रक्रम्यते। तत्र श्रूयमाणक्रियोपजनितसंबन्धविशेषावद्योतकाः कर्मप्रवचनीया इष्यन्ते। यथा वृक्षं प्रति विद्योतते विद्युदित्यत्र प्रतिः कर्मप्रवचनीयावद्योतनक्रियोपजनितं स्वस्य वृक्षेण सह लक्ष्यलक्षणभावरूपं संबन्धमवद्योतयति, कर्म क्रियां प्रोक्तवन्तः कर्मप्रवचनीया इति व्युत्पत्तेः। बाहुलकाद् भूतेऽर्थे कर्तर्यनीयर्प्रत्ययः। क्वचिदन्यत्र क्रियां प्रोक्तवन्तः, सांप्रतं तु न क्रियावचनः, किन्तु क्रियोपजनितस्य संबन्धविशेषस्यावद्योतका इति व्युत्पत्तेरर्थः। तथा वृक्षं प्रति विद्योतते इत्यत्र प्रतिः कर्मप्रवचनीयः संबन्धविशेषं लक्ष्यलक्षणभावमवद्योतयन् संबन्धसामान्यं द्वितीयार्थं परिच्छिनत्ति, प्रतिस्त्वन्यत्र देवा असुरान् अप्रत्यजयन्नित्यादौ प्रतिष्ठारूपां क्रियां प्रोक्तवानित्यप्रतिष्ठितानसुरान् देवा अजयन्निति तदर्थः। तदुक्तं हरिणा—

क्रियाया द्योतको नाऽयं संबन्धस्य न वाचकः।
नापि क्रियापदाक्षेपी संबन्धस्य तु भेदकः॥ इति।

( वा० प० २। २०४ )

एवं सम्बन्धावच्छेदहेतवः कर्मप्रवचनीया इति स्थितम्। सम्बन्धश्च सर्वोऽपि क्रियाकारकपूर्वको भवति। कस्याञ्चित् क्रियायां कारकीभूतयोरेव द्वयोः परस्परं संबन्धः क्रियया जन्यत इति। तथाहि—राजा पुरुषमिमं बिभर्तीति वाक्ये भरणक्रियायाः कर्तृकर्मभूतयोरेव राजपुरुषयोः स्वस्वामिभावलक्षण आश्रयाश्रयिभावलक्षणो वा सम्बन्धो भरणक्रिययोपजन्यत इति। तत्र क्वचित् सम्बन्धं जनयित्वा क्रिया विनिवर्तते। यथा राजपुरुष इति। अत्र हि राज्ञः पुरुषोऽयम्, यस्मात् स राजा पुरुषं बिभर्ति, अतो भरणलक्षणा क्रिया आश्रयाश्रयिभावलक्षणं राजपुरुषयोः सम्बन्धं जनयित्वा 'राज्ञः पुरुषः' इत्यत्र निवृत्तेति न श्रूयते। क्वचित् क्रियापदं श्रूयमाणमेव सत् स्ववाच्यक्रियायाः कारकेण सम्बन्धमुपजनयति। सम्बन्धं जनयित्वाऽपि च श्रूयत एव, न तु विनिवर्तते। तद्विनिवृत्तौ सम्बन्धस्यापि विनिवृत्तिप्रसङ्गात्, द्विष्ठत्वात् सम्बन्धस्येति। उदाहरणं तु मातुः स्मरतीति। अत्र हि मातुरिति कर्मपदम्, अतो मातृसम्बन्धिस्मरणमिति निमित्तनिमित्तिभावलक्षणं सम्बन्धं श्रूयमाणैव स्मरतिक्रिया जनयति। एतदेवोक्तं हरिणा—

सम्बन्धः कारकेभ्योऽन्यः क्रियाकारकपूर्वकः।
श्रुतायामश्रुतायां वा क्रियायां सोऽभिधीयते॥ इति।

( वा० प० ३। ७।१५६ )

एवं श्रूयमाणयाऽश्रूयमाणया वा क्रियया संबन्धो जन्यत इति व्यवस्थितम्। तथा च सम्बन्धं जनयित्वा क्रियापदे विनिवृत्ते सति स उपजातः, सम्बन्धस्त्वेतत्क्रियाकृतोऽयं सम्बन्ध इति नियमेनाप्रतीयमानः कर्मप्रवचनीयैस्तत्र तत्र तस्य तस्यां क्रियायां जन्यत्वेन नियम्यते। तत्तत्क्रियाजन्यत्वेन सम्बन्धविशेषः कर्मप्रवचनीयैः प्रत्याय्यते (अवद्योत्यते), सम्बन्धस्य षष्ठ्यपवादभूतया द्वितीययोक्तत्वात्। उदाहरणं तु 'वृक्षं प्रति विद्योतते विद्युत्' इति। अत्र हि वृक्षमभिलक्ष्य विद्युद् विद्योतते इत्यर्थाभिप्रायेण वृक्षविद्योतनयोर्लक्ष्यलक्षणभावः सम्बन्धो लक्षणक्रिययोपजनितः। सा च क्रिया तं सम्बन्धमुपजन्य प्रतिनिवृत्तेति हेतोर्वृक्षविद्योतनयोः सम्बन्धः कश्चिदस्ति। स च कः? किंक्रियाकृतश्चेति कर्मप्रवचनीयाभावे न विज्ञायेत। कर्मप्रवचनीयसत्त्वे त्वत्र प्रतिना कर्मप्रवचनीयेन पूर्वं लक्षणक्रियामुक्त्वा तत्कृतो लक्ष्यलक्षणभावरूपः सम्बन्धो

द्वितीययोक्तोऽवद्योत्यत इति। 'सकृदुच्चरितः शब्दः सकृदर्थं गमयति' इति न्यायविरोधस्तु न, कर्मप्रवचनीयेऽभिधाव्यञ्जनारूपवृत्तिद्वयाभ्युपगमात्। दृश्यते च 'गङ्गायां घोषः' इत्यादौ सकृदुच्चरितस्यापि गङ्गापदस्य वृत्तिभेदेन क्रमेण शक्यलक्ष्यव्यङ्ग्यरूपार्थत्रयबोधकत्वमिति सकृदुच्चरित इति न्यायो वृत्तिभेदाभावविषयकः। अत एव पूर्वं कर्मक्रियां प्रोक्तवन्तः सन्तः पश्चात् तत्क्रियाकृतं सम्बन्धविशेषमवद्योतयन्तीति कर्मप्रवचनीया इत्युच्यन्त इति।

ननु यथा 'प्रादेशं विलिखति' इत्यत्र विर्विमानक्रियाया आक्षेपकः, प्रादेशं विमाय लिखतीति। एवं 'वृक्षं प्रति विद्योतते विद्युत्' इत्यादौ प्रत्यादयः कर्मप्रवचनीया अश्रूयमाणाया लक्षणादिक्रियाया आक्षेपकाः कुतो नाश्रीयन्ते? वृक्षमभिलक्ष्य विद्युद् विद्योतत इति। एवञ्च प्रत्यादयः कर्मप्रवचनीयाः षष्ठ्यपवादभूतद्वितीयोक्तस्य सम्बन्धस्यावद्योतका लक्षणादिक्रियाया आक्षेपमुखेन भविष्यन्ति। तथा च न कर्मप्रवचनीयस्थले क्रिया सम्बन्धं जनयित्वा विनिवृत्तेति कथमुच्यते 'स चोपजातः संबन्धो विनिवृत्ते क्रियापदे' इतीति चेच्छृणु—

येन शब्देन क्रियापदस्याक्षेपः क्रियते, स क्रियापदाक्षेपकत्वेन क्रियाबोधकत्वात् कारकविभक्तिभिर्युज्यते। यथा 'प्रादेशं विपरिलिखति' इत्यत्र विशब्दो विमानक्रियाक्षेपकत्वेन प्रादेशमिति कारकविभक्त्या युज्यते, न तु लिखतिः, प्रादेशं विमाय परिलिखतीत्यर्थात्। एवञ्च विशब्दस्य मा-धात्वर्थं प्रत्युपसर्गत्वं गतित्वञ्च, न तु लिखतिं प्रति, इति प्रादेशं विपरिलिखतीत्यत्र गतिर्गताविति निघातो न। तथा च विशब्दादिवत् कर्मप्रवचनीयैरपि यदि क्रियापदमाक्षिप्येत, तदा तद्योगे कारकविभक्तिरेव स्यात्। ततश्च 'कर्मप्रवचनीययुक्ते द्वितीया' इति सूत्रं नारम्भणीयं स्यात्। यदा तु कर्मप्रवचनीयेन क्रियापदं नाक्षिप्यत इति स्वीक्रियते, तदा वृक्षविद्योतनयोः सम्बन्धसामान्ये षष्ठी प्राप्नोतीति तद्बाधनाय "कर्मप्रवचनीययुक्ते द्वितीया" (२।३।८) इति शास्त्रारम्भः शोभत इति।

क्वचित्तूपसर्गस्य स्वार्थाभिधायित्वेऽपि स्वार्थाभिधानमुखेन धातुना सम्बन्धो भवत्येव, न तु क्रियापदाक्षेपकोपसर्गवत् समभिव्याहृतधातुना सम्बन्धो न भवति। किञ्च, तत्रोपसर्गस्य स्वार्थाभिधानमुखेनैव सम्बन्धः, न तु धात्वर्थावद्योतकत्वेन। तद्यथा—

'अभिषुण्वन्ति' इत्यत्राभिः केवले आभिमुख्ये वर्तते, न तु धातुराभिमुख्यविशिष्टे सवने वर्तते, तद्द्योतकत्वं त्वभेरिति। आभिमुख्यस्य लिङ्गसंख्यान्वययोग्यस्यार्थस्य सत्त्वभूतस्य धातुनाऽभिधानायोगात्। 'असत्त्वभूतो भावश्च तिङ्पदैरभिधीयते' इति धातुस्वभावात्। एवञ्चाभिमुख्यविशिष्टस्याभिपदार्थस्य क्रियाविशेषणत्वेनाभेदेन सवनेऽन्वय इति स्वार्थमुखेनाभेर्धात्वर्थे सवनेऽन्वय इति।

ननु प्रागुक्तरीत्या क्रियां प्रोच्य सम्बन्धं जनयित्वा विनिवृत्ते क्रियापदे सम्बन्धविशेषावद्योतकानामेव कर्मप्रवचनीयत्वे क्रियायोगेन क्रियाविशेषावद्योतकानां स्वत्यादीनां कर्मप्रवचनीयत्वं न स्यात् । यथा —सुसिक्तम्, अतिसिक्तमिति । अत्र हि सुष्ठु सिक्तम्, अतिशयेन सिक्तमित्यर्थेन क्रियागतस्यैव सौष्ठवस्यातिशयस्य च प्रतीत्या क्रियाविशेषावद्योतकावेव स्वती इत्याशङ्कां मनसिकृत्य समाहितं हरिणा—

कर्मप्रवचनीयत्वं क्रियायोगे विधीयते ।
षत्वादिविनिवृत्त्यर्थं स्वत्यादीनां विधर्मणाम् ।। इति ।
( वा० प० २।२०२ )

अत्र विधर्मणामित्यस्य सम्बन्धविशेषावद्योतकत्वरूपकर्मप्रवचनीयधर्मापेक्षया क्रियाविशेषावद्योतकत्वरूपविरुद्धधर्मवतां स्वत्यादीनामित्यर्थः । एवं प्रायेण कर्मप्रवचनीयाः सम्बन्धविशेषावद्योतकाः, क्वचित्तु क्रियाविशेषावद्योतकाः । तत्र तेषां सम्बन्धविशेषावद्योतकत्वे द्वितीयाप्रापकत्वेन शेषषष्ठीबाधः फलम् । क्रियाविशेषावद्योतकत्वे तु 'वृक्षं सुसिञ्चति' इत्यादौ द्वितीयाया उत्सर्गसिद्धत्वेन शेषषष्ठ्याश्चाप्राप्तत्वेन न द्वितीयाप्राप्ति-षष्ठीबाधौ फलम् , किन्तु षत्वादिविनिवृत्तिः फलमिति स्थितम् । क्वचित्तु कर्मप्रवचनीयानां हेतुतृतीयाबाधोऽपि फलम् । यथा 'शाकल्यस्य संहितामनुप्रावर्षत्' इत्यत्र हेतुहेतुमतोः शाकल्यस्य संहिताप्रवर्षणयोर्योगस्य हेतुहेतुमद्भावलक्षणस्यावधारणेऽनुना कृते सति कर्मप्रवचनीययोगात् प्राप्तां लक्षणद्वितीयां ज्ञाप्यज्ञापकभावस्थले सावकाशां परत्वात् प्रबाध्य प्राप्ता हेतुलक्षणा तृतीया लक्षणत्वेनानोः कर्मप्रवचनीयत्वे लक्षणेत्थमिति शास्त्रेण सिद्धे सति पुनः 'अनुर्लक्षणे' ( १।४।८४ ) इति कर्मप्रवचनीयसंज्ञाविधायकशास्त्रारम्भसामर्थ्याद् बाध्यत इति ।

तदेवं कर्मप्रवचनीयाः सम्बन्धविशेषावद्योतका इत्ययमेव पक्षो हरिसम्मतः । तदुक्तं तेन—

क्रियाया द्योतको नाऽयं सम्बन्धस्य न वाचकः ।
नापि क्रियापदाक्षेपी सम्बन्धस्य तु भेदकः ॥ इति ।
( वा० प० २।२०४ )

यद्यपि प्राग् वृत्तिपदवाक्यानां तदर्थानाञ्चाखण्डत्वं हरिसंमततया निर्धारितम् , तथाप्यस्मिन् पक्षे सखण्डत्ववादिनश्चोद्यसप्तकमवतारयन्ति । तथाहि----द्वन्द्वे तद्घटकपदार्थभेदानभ्युपगमे तदेकत्वे सति 'देवदत्तयज्ञदत्तविष्णुमित्रा भोज्यन्ताम्' इत्यत्र बहुवचनं नोपपद्यत इत्येकम् । द्वन्द्वे प्रत्येकं वाक्यपरिसमाप्तिर्नोपपद्यत इति द्वितीयम् । 'जनपदतदवध्योश्च' (१।४।८४)

इत्यादौ द्वन्द्वघटकेन सर्वनाम्ना तच्छब्देन जनपदपदार्थस्य प्रत्यवमर्शो नोपपद्यत इति तृतीयम्। 'धवखदिरपलाशाश्छिद्यन्ताम्' इत्यादावखण्डेऽक्रमे वृत्त्यर्थे क्रमेण छिदिक्रियाऽनुष्ठानं नोपपद्यत इति चतुर्थम्। 'अस्मिन् पर्वते मम पुरुषैर्धवखदिरपलाशाश्छिद्यन्ताम्' इत्यत्र पर्वतनिरूपितं धवखदिरपलाशच्छेदनं वाक्यार्थः। तत्रैकदेशमात्रेऽपि कैश्चिच्छिन्ने 'यदादिष्टं तत्कृतम्' इति ते ब्रुवन्ति, तदयमेकदेशानुष्ठाने समुदायार्थानुष्ठानाभिमानो वाक्यार्थे वृत्त्यर्थे वा पदार्थभेदानभ्युपगमे नोपपद्यत इति पञ्चमम्। वृत्तौ पदार्थभेदानभ्युपगमे पूर्वोत्तरपदार्थप्राधान्यविकल्पकृतो वृत्तिविकल्पो नोपपद्यत इति षष्ठम्। वृत्तौ पदार्थासंभवे जहत्स्वार्थाजहत्स्वार्थविकल्पो नोपपद्यत इति सप्तममिति। तत्रैकोऽपि निरस्तावयवभेदो बहूनामभिधायको भवति। यथा गर्गा इति दृष्टान्तेनाद्यं चोद्यं परिहृतं हरिणा—

गर्गा इत्येक एवायं बहुष्वर्थेषु वर्तते।
द्वन्द्वसंज्ञोऽपि सङ्घातो बहूनामभिधायकः॥ इति।
(वा० प० २।२२१)

अयं भावः—यथा गर्गस्यापत्यानि बहूनि गर्गा इत्यत्रैकशेषे कृते गर्गा इति गर्गशब्द एक एवायं निरस्तावयवविभागो बहुष्वर्थेषु वर्तत इति बह्वर्थवृत्तित्वाद् बहुवचनं ततो जायत इति बहुवचनान्तः। तथैव द्वन्द्वसंज्ञः सङ्घातो निरस्तावयवभेदोऽपि शब्दशक्तिस्वाभाव्याद् बहूनामभिधायक इति। ततः सत्यपि बहुवचने न तत्र तावता वृत्त्यर्थव्यतिरेकेण पदार्थसद्भावोऽनुमातुं शक्य इति।

द्वितीयं चोद्यमपि परिहृतं हरिणा—

यथैकदेशो भुज्यादिः प्रत्येकमवतिष्ठते।
क्रियैवं द्वन्द्ववाच्येऽर्थे प्रत्येकं प्रविभज्यते॥ इति।
(वा० प० २।२२२)

अयं भावः—यथा 'ब्राह्मणा भोज्यन्ताम्' इत्यत्र पूर्वमेकशेषात् समुदायप्रतिपत्तौ सत्यामपि पदार्थान्वयबाधेऽनन्तरमपोद्धारबुद्ध्याऽवयवान् प्रकल्प्य प्रत्येकं भुजिक्रिया समाप्यते, तथैव द्वन्द्वात् समुदाये प्रतिपन्ने सति बुद्धिपरिकल्पितावयवप्रविभागसमाश्रयणेन प्रत्येकं वाक्यपरिसमाप्तिरुपपद्यत इति।

तृतीयं चोद्यमप्येवं परिहृतं हरिणा—

यच्च द्वन्द्वपदार्थस्य तच्छब्देन व्यपेक्षणा।
साऽपि व्यावृत्तरूपेऽर्थे सर्वनामसरूपता॥ इति।
(वा० प० २।२२३)

अयं भावः—जनपदतदवध्योश्चेत्यत्र द्वन्द्वघटकतच्छब्दस्य सर्वनामसारूप्यमात्रमाभाति, न तु वस्तुतस्तत्र तच्छब्दो द्वन्द्वघटकः सर्वनामाऽस्ति; न वा तत्पदार्थप्रत्ययः कश्चित् सम्मतस्तत्र। एवञ्च यतो नात्र किञ्चित् सर्वनाम विद्यते, तत्कुत एवात्र द्वन्द्वघटकपदार्थपरामर्शः स्यादिति। तदेतदप्युक्तं हरिणा—

यदन्तराले ज्ञानं तु पदार्थेषूपजायते।
प्रतिपत्तेरुपायोऽसौ प्रक्रमानवधारणात्॥ इति।
(वा० प० २। ४१०)

चतुर्थं चोद्यमप्येवं परिहृतं हरिणा—

यथा च खदिरच्छेदे भागेषु क्रमवांश्छिदिः।
तथा द्वन्द्वपदार्थस्य भागेषु क्रमदर्शनम्॥ इति।
(वा० प० २। २२४)

अयं भावः—पदार्थवाक्यार्थयोर्भेदवादिमते यत्रापि खदिरश्छिद्यतामित्यादौ पदार्थवाक्यार्थयोर्भेदः प्रतीयते, तत्रापि सावयवोऽपि खदिरोऽखण्ड एव शब्दशक्त्या प्रतीयते। सावयवाऽपि छिदिक्रियाऽखण्डैव प्रतीयते। तत्र खदिरस्य सावयवत्वं प्रसिद्धमेव। क्रियाया अपि सावयवत्वम् "क्रिया नामेयमत्यन्ता परिदृष्टावयवा न शक्या पिण्डीभूता निदर्शयितुम्" इत्यादिभाष्यतः प्रतीयते। उक्तञ्च हरिणा—

गुणभूतैरवयवैः समूहः क्रमजन्मनाम्।
बुद्ध्या प्रकल्पिताभेदः क्रियेति व्यपदिश्यते॥ इति।
(वा० प० ३। ८।४)

लोके चापि प्रसिद्धः क्रियाया अवयवभेदः। यथाऽत्रैव प्रथमं खदिरस्य त्वग्भागं छिन्दन्ति, ततोऽस्थिभागम्, ततः सारभागमिति क्रमवर्तिन्येव छिदिक्रियानुभूयते। तथा च खदिरश्छिद्यतामित्यादावखण्डाऽक्रमा च छिदिक्रिया शब्दशक्त्या प्रतीयमानाऽपि युगपदनुष्ठातुमशक्यत्वात् क्रमवर्तिन्येव पर्यवस्यति; तथैव धवखदिरपलाशाश्छिद्यन्तामित्यादौ द्वन्द्वे वृत्त्यर्थेऽखण्डेऽपि यः पदार्थोऽपोद्धारबुद्धिपरिकल्पितः, तस्य क्रमेण दर्शनमिति तत्क्रमेणैव छिदिक्रियाया अनुष्ठानमिति।

पञ्चमं चोद्यमपि प्रत्येकं वाक्यपरिसमाप्तिर्दृष्टेति लोकनिदर्शनेन समाहितं हरिणा—

सङ्घैकदेशे प्रक्रान्तान् यथासङ्घानुपातिनः।
क्रियाविशेषान् मन्यन्ते स द्वन्द्वावयवे क्रमः॥ इति।
(वा० प० २। २२५)

ब्राह्मणा भोज्यन्तामित्यादेशोत्तरं प्रत्येकं भोजयित्वा भुक्तं ब्राह्मणैरित्युच्यते। स द्वन्द्वावयवे क्रमः। पूर्वं द्वन्द्वार्थे समुदाये क्रियासंबन्धः, तद्बाधे पश्चात् प्रत्येकं स इति तदर्थः। एवञ्च यथा ब्राह्मणा भोज्यन्तामित्यत्र प्रत्येकं भुजिक्रियापरिसमाप्तावपि न शब्दार्थः परित्यक्तो भवति, तथा द्वन्द्ववाच्यसमुदायान्तर्गतावयवप्रवर्तिताऽपि छिदिक्रिया शब्दार्थपरित्यागकारणतां न प्रतिपद्यत इति हृदयम्।

षष्ठं चोद्यमपि समाहितं हरिणा—

प्रतिपादयता वृत्तिमबुधान् वाक्यपूर्विकाम्।
वृत्तौ पदार्थभेदेन प्राधान्यमुपदर्शितम्॥ इति।
(वा० प० २। २२६)

अयं भावः—अबुधबोधनाय वृत्तावपोद्धारकल्पनयाऽलौकिकविग्रहवाक्यं कल्पयित्वा तत्र शास्त्रप्रवृत्तिरूपं प्रक्रियामाचार्येण प्रदर्शितमिति न वृत्तौ वस्तुतः पदपदार्थविभागोऽस्तीति न तावता तत्र पदपदार्थसत्ताऽभ्युपगतेति वक्तुं शक्यत इति।

सप्तमं चोद्यमप्येवं समाहितं हरिणा—

जहत्स्वार्थविकल्पे च सर्वार्थत्यागमिच्छता।
बहुव्रीहिपदार्थस्य त्यागः सर्वस्य दर्शितः॥ इति।
(वा० प० २। २२८)

अस्यार्थः—यतो वृत्तौ सर्वार्थत्यागमिच्छताऽनेकमन्यपदार्थे इति वदताऽचार्येण सूत्रकृता सर्वस्य बहुव्रीहिपदार्थस्य त्यागो जहत्स्वार्थविकल्पे जहत्स्वार्था समासरूपा वृत्तिरिति विकल्पैकदेशे प्रमाणत्वे दर्शितः। अतो वृत्तितदर्थयोरखण्डत्वमेवाचार्याभिप्रेतमिति लक्ष्यते। बहुव्रीहौ हि पदार्थव्यतिरेकेणान्य एव समुदायार्थो विशिष्ट एवाखण्डः प्रतिभातीति। अतः सर्वथा न वास्तवः कश्चित् पदार्थव्यवहारो वृत्तावङ्गीकार्य इति। तदेवं द्वन्द्वे बहुवचनम्, प्रत्येकं वाक्यपरिससमाप्तिः, सर्वनाम्ना प्रत्यवमर्शः, क्रमेणानुष्ठानम्, एकदेशानुष्ठाने समुदायार्थानुष्ठानाभिमानश्चेति पञ्च चोद्यान्यपोद्धारकल्पनासमाश्रयेणाखण्डवादिना परिहृतानि। नञ्समासेऽन्यत्र वृत्तौ चान्यपदपूर्वपदोत्तरपदार्थप्राधान्यविकल्पः कल्पितेऽलौकिकप्रक्रियावाक्य एव, न तु वृत्तौ, तत्राखण्डत्वेन जहत्स्वार्थपक्षाभ्युपगमे च 'अनेकमन्यपदार्थे' इति सूत्रं मानमिति षष्ठसप्तमचोद्येऽपि समाहिते हरिणाऽनेन पद्येन, 'प्रतिपादयता वृत्तिम्' इति पद्येन चेति।

सर्वोऽप्ययं वृत्तौ, वाक्ये च पदपदार्थव्यवहारः कल्पितोऽसत्यभूत एव वृत्तिवाक्यसाधुत्वबोधाभ्युपायभूतो नानाविधशास्त्रप्रक्रियामात्रशरणोऽवगन्तव्यः प्रकृतिप्रत्ययतदर्थव्यवहार इव। यतः

सर्वेषु व्यकरणेषु स्थान्यादेशभावकल्पनाभेदाः, प्रकृतिप्रत्ययतदर्थकल्पनाभेदाः, आगमविकारादिकल्पनाभेदा बहुशः समुपलभ्यन्ते पुरुषमतिविकल्पप्रभवाः। न केवलं व्याकरण एव प्रक्रियाभेदा उपलभ्यन्ते, किन्तर्हि वेदान्तशास्त्रेषूपनिषत्स्वपि जगत्सर्गप्रकियाभेदाः समुपलभ्यन्त एव। तद्यथा—क्वचिज्जगतः सक्रमा सृष्टिः श्राव्यते, क्वचिदक्रमा, क्वचिद् वियदादिका, क्वचित्तेज आदिकेति। अतो विज्ञायते, व्याकरणेष्वन्यत्र चाबुधानां व्युत्पादनरूपाय व्यवहारायाविद्यैवा ऽसत्या प्रक्रियाभेदेनोपवर्ण्यते। विद्या ह्येकरूपैव भवति, न तु तत्र प्रक्रियाभेदः संभवतीत्येतदुक्तं हरिणा—

शास्त्रेषु प्रक्रियाभेदैरविद्यैवोपवर्ण्यते।
अनागमविकल्पा तु स्वयं विद्योपवर्तते॥ इति।
(वा० प० २। २३३)

एतदभिप्रेत्यैवोक्तम्—
उपायाः शिक्षमाणानां बालानामुपलालनाः।
असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते॥ इति।
(वा० प० २। २३८)

ननु यद्येवम्, किमविद्योपदर्शकशास्त्रप्रक्रियासमाश्रयेण प्रेक्षापूर्वकारिणामिति चेन्न; अविद्योपमर्देन ह्युत्तरकालमागमविकल्परहिता शास्त्रप्रक्रिया प्रपञ्चशून्या विद्या प्रकटीभवतीति। तदेवं वाक्यवाक्यार्थयोरखण्डत्वपक्षे सर्वेषां चोद्यानां परिहाराद् निरवद्यमखण्डमेव स्फोटात्मकं वाक्यं प्रतिभैव च वाक्यार्थ इति स्थितम्।

अथ वाक्यवाक्यार्थयोरखण्डवादिभिर्वाक्यवाक्यार्थयोरपोद्धारकल्पनया पदपदार्थभेदो व्यवहारार्थमभ्युपेत इति पदार्थेषु मुख्यगौणविचारः प्रसंगात् प्राप्तः प्रस्तूयते। तदुपयोगितया च प्रत्यर्थं शब्दभेदः शब्दाभेदो वेत्येव प्राक् परीक्ष्यते। तत्रेदमुक्तं हरिणा—

एकमाहुरनेकार्थं शब्दमन्ये परीक्षकाः।
निमित्तभेदादेकस्य सार्वार्थ्यं तस्य भिद्यते॥ इति॥
(वा० प० २। २५०)

अयं भावः—व्याकरणशास्त्रे एकशब्ददर्शनमनेकशब्ददर्शनञ्चेति द्वौ पक्षौ। तथाहि—प्रत्यर्थं शब्दाभिनिवेश इति भाष्ये स्मर्यते। तत्रार्थमर्थं प्रति प्रत्यर्थमिति व्युत्पत्तिमाश्रित्यार्थभेदेन शब्दभेद इत्यनेकशब्ददर्शनं प्रवृत्तम्, वृत्तावेकत्वभानस्यौत्सर्गिकत्वात्। अर्थौ अर्थौ

प्रति, अर्थान् अर्थान् प्रति यत्तदपि प्रत्यर्थमेवेति भाष्यकृता स्वयमेव व्याख्यानादर्थभेदेऽपि शब्दैक्यमेवेत्येकशब्ददर्शनं प्रवृत्तम्। तत्रापि पदपदार्थयोः सत्यत्वं पदवादिमतेन, असत्यत्वञ्च अखण्डवाक्यवाक्यार्थवादिवैयाकरणमतेन प्राक्प्रतिपादितेनेति प्रागुक्तसङ्कलनया चत्वारः पक्षाः। तदेतं प्राक् प्रतिक्षिप्तमपि पदवादिनां पक्षं व्याकरणशास्त्रे व्यवहारार्थमङ्गीकरोत्येव परमवैयाकरणः श्रीभर्तृहरिः। यत इदं व्याकरणशास्त्रं नैकस्य दर्शनस्य सिद्धान्तमनुरुध्य प्रवृत्तम्, किं तर्हि शब्दसाधुत्वानुशासनरूपस्वव्यवहारसिद्धये सर्वानपि दर्शनसिद्धान्तान् क्वचित् क्वचिदनुरुणद्धि। अत एव सर्वपार्षदमिदं व्याकरणशास्त्रं गीयते वैयाकरणैरन्यैश्च। सर्वा दर्शनपरिषदः शब्दसाधुत्वसिद्धये समाश्रीयन्त इति सर्वपार्षदम्। 'शेषे' इति विधिसूत्रेण अत्राऽण् प्रत्ययः। तथा हि सत्कार्यवादाभिप्रायेण 'कोशे संभवति कौशेयं वस्त्रम्' इत्यस्य सिद्धये पाणिनिना 'कोशाड्ढञ्' (४।३।४२) इति सूत्रं कृतम्। मतान्तराभिप्रायेण तु वार्तिककृता "विकारे कोशाड्ढञ्, संभूते ह्यर्थानुपपत्तिः" इत्युक्तम्। किञ्चास्य शास्त्रस्य सर्वपार्षदत्वादेव—

एकं द्विकं त्रिकं चाथ चतुष्कं पञ्चकं तथा।
नामार्थ इति सर्वेऽमी पक्षाः शास्त्रे निरूपिताः॥

इत्युक्तम् भूषणे। किञ्च शब्दानित्यत्ववादं वार्तिकसम्मतं समाश्रित्य "इकोयणचि" (६।१।७७) इत्यादीन्यादेशसूत्राणि "अचः परस्मिन्०" (१।१।५७) इत्यादीन्यतिदेशसूत्राणि च प्रवृत्तानि।

सर्वे सर्वपदादेशा दाक्षीपुत्रस्य पाणिनेः।
एकदेशविकारे हि नित्यत्वं नोपपद्यते॥

इति भाष्यकृता शब्दनित्यत्ववादोऽपि समादृतः। वार्त्तिककृताऽपि 'सिद्धे शब्दार्थसम्बन्धे' (म० भा० पस्पश०) इत्युक्तम्। सूत्रकृताऽपि 'तदशिष्यं संज्ञाप्रमाणत्वात्' (१।२।५३) इति शब्दनित्यताऽभिप्रायेणैवोक्तम्। किञ्च, सूत्रकृता प्रत्यर्थमनेकशब्ददर्शनमाश्रित्य "सरूपाणामेकशेष एकविभक्तौ" (१।२।६४) इति सूत्रं कृतम्। एकशब्ददर्शनमाश्रित्य तु भाष्यकृता प्रत्याख्यातमिति दिक्। सर्वपार्षदे च व्याकरणशास्त्रे स्थितोऽयं तत्रभवान् भर्तृहरिरिति प्राक् प्रतिक्षिप्तावपि पदपदार्थावत्र पुनरङ्गीकरोति। तत्रैकशब्ददर्शने गौणमुख्यविभागरूपः शब्दव्यवहारः प्रसिद्ध्यप्रसिद्धिनिमित्तकः। तथाहि—प्रसिद्धेऽर्थे सास्नादिमत्यनारोपितगोत्ववति शक्त्या प्रयुज्यमानो गोशब्दः प्रसिद्धिनिबन्धनो मुख्यः। जाड्यादिगुणवत्त्वेन सादृश्याद् गोत्वमारोप्य आरोपितगोत्ववति वाहीकादावप्रसिद्धया शक्त्या लक्षणया वा प्रयुज्यमानो गोशब्दोऽप्रसिद्धिनिबन्धनो गौणः।

स च शब्दव्यवहारः प्रसिद्ध्यप्रसिद्धिरूपनिमित्तभेदेऽप्येक एव। एकस्यैव गोशब्दस्यैकस्मिन्नेवार्थे आरोपितत्वानारोपितत्वे अनादृत्य गोत्ववति प्रयुज्यमानत्वात्। एकशब्ददर्शन एव चार्थव्यवहारो द्विधा–स्वरूपार्थत्वेन बाह्यार्थत्वेन चेति। तथाहि—गोशब्दस्य गोत्वजातीये वाहीकादौ च प्रयुज्यमानस्य शब्दस्वरूपमेवार्थः प्रवृत्तिनिमित्तमित्येकोऽर्थोपचारः। अपरस्तु—एकस्यैव गोशब्दस्य गोत्वजातीये वाहीकादौ च प्रयुज्यमानस्य शब्दस्वरूपाद् बाह्यं ( भिन्नम् ) गोत्वमेवारोपितमनारोपितं वाऽर्थः प्रवृत्तिनिमित्तमिति। तथा चैवमेकः शब्दोपचारः, शब्दैकत्वात्; द्वौ त्वर्थोपचारौ अर्थभेदादित्येवं त्रयः पक्षाः।

एवमनेकशब्ददर्शनेऽपि त्रयः पक्षाः। तदेवमेतैस्त्रिभिः पक्षैर्भेदिताश्चत्वारः प्रागुक्ताः पक्षाः ( शब्दैक्यानैक्ये, पदपदार्थयोः सत्यत्वासत्यत्वे इत्येवं प्रागुक्ताश्चत्वारः पक्षाः ) द्वादश संपद्यन्ते। तत्रैकशब्ददर्शनमाश्रित्य तावद् गौणमुख्यविचारः 'एकमाहुरनेकार्थम्' इति पद्येन हरिणा कृतः। सर्वेष्वप्यर्थेषु गौणेषु मुख्येषु चैक एव गोशब्दो वाचकः।

नन्वेवं सति युगपदेव सर्वार्थप्रकाशनं कस्मान्न करोतीत्याशङ्कयोक्तम्—निमित्तभेदादिति। अर्थप्रकरणादिरूपनिमित्तभेदादेकस्यापि गोशब्दस्य सर्वार्थविषयाऽभिन्नाऽपि वाचकत्वशक्तिर्भिद्यत इति। एवं यद्यपि गोशब्दस्यैकस्यैव भिन्नार्थवाचकत्वशक्तिरेकैव, तथापि क्वचिदर्थं तस्य गौणत्वं क्वचित्तु मुख्यत्वमिति व्यवहारभेदः प्रसिद्ध्यप्रसिद्धिभेदात्। तदेतदुक्तं हरिणा—

सर्वशक्तेस्तु तस्यैव शब्दस्यानेकधर्मणः।
प्रसिद्धिभेदाद् गौणत्वं मुख्यत्वं चोपवर्ण्यते॥ इति।

( वा. प. २। २५३ )

अनेकशब्ददर्शने तु सूपपाद एव गोशब्दस्यार्थभेदेन भेदाद् गौणमुख्यव्यवहारः। शब्दभेदेऽप्येकत्वप्रतीतिस्तु शब्दयोः समानानुपूर्वीकत्वरूपात् सारूप्यादिति। तदुक्तं हरिणा—

एकत्वं तु सरूपत्वाच्छब्दयोर्गौणमुख्ययोः।
प्राहुरत्यन्तभेदेऽपि भेदमार्गानुदर्शिनः॥ इति।

( वा. प. २। २५७ )

तदेवमर्थभेदाच्छब्दस्य भेदे वेदे पठितानां मन्त्राणां कर्मसु प्रयुज्यमानानाञ्च मन्त्राणां भेद एव, वेदे पठितानाञ्चापठितोपलक्षणार्थतेति द्रष्टव्यम्। तदेवं मन्त्राणां संस्कारादिकर्मसु विनियोगभेदात्, पठ्यमानमन्त्रेण लक्षणया बोधितानां चाभिन्नानामेव प्रतीतिः। यद्वा शक्त्या

स्वरूपार्थत्वमाश्रित्य भिन्नानामेव पठ्यमानमन्त्रेभ्यः प्रतीतिरस्तु, सर्वथाऽपि त्वेषां मन्त्राणां पठितापठितानां स्वरूपभेद एव मन्तव्यः । नत्वेकत्वमित्युपसंहृतं हरिणा—

अन्या संस्कारसावित्री कर्मण्यन्या प्रयुज्यते ।
अन्या जपप्रबन्धेषु सा त्वेकैव प्रतीयते ।। इति ।

( वा. प. २ । २६१ )

तदेवं पक्षद्वयेऽपि गौणमुख्यप्रविभागे व्यवस्थिते गौणलक्षणमुक्तं हरिणा—

अर्थप्रकरणापेक्षो यो वा शब्दान्तरैः सह ।
युक्तः प्रत्याययत्यर्थं तं गौणमपरे विदुः ।। इति ।

( वा. प. २ । २६४ )

मुख्यलक्षणं तु—

शुद्धस्योच्चारणे स्वार्थः प्रसिद्धो यस्य गम्यते ।
स मुख्य इति विज्ञेयो रूपमात्रनिबन्धनः ।। इति ।

( वा. प. २ । २६५ )

अन्यथाऽपि गौणमुख्यविभागो दर्शितो हरिणा—

स्वार्थे प्रवर्तमानस्य यस्यार्थं योऽवलम्बते ।
निमित्तं तत्र मुख्यं स्याद् निमित्ती गौण इष्यते ।। इति ।

( वा. प. २ । २६७ )

व्याख्यातञ्च पुण्यराजेन—'यो वाहीके प्रवर्तमानः स्वार्थे सास्नादिमति वर्तमानस्य गोशब्दस्य सम्बन्धिनमर्थं निमित्तत्वेनावलम्बते, तत्र विषये मुख्योऽर्थो निमित्तं स्यात्, गौणस्तु निमित्तीत्युच्यते । एतदुक्तं भवति—यत्रास्खलद्गतिः शब्दस्तत्र मुख्योऽर्थः, स्खलद्गतित्वे तु गौणार्थतेति बोद्धव्यमिति । तदेवमर्थद्वयस्य योऽयं निमित्तनिमित्तिभावस्तत्सहितस्यैवार्थप्रकरणादे-र्गौणमुख्यविभागहेतुत्वम्, केवलस्य तु तस्य तत्त्वेऽतिप्रसङ्ग इत्युक्तं हरिणा—

पुराऽऽरादिति भिन्नेऽर्थे यौ वर्तेते विरोधिनि ।
अर्थप्रकरणापेक्षं तयोरप्यवधारणम् ।। इति ।

( वा. प. २ । २६८ )

न च तत्र तयोर्गौणमुख्यविभाग इष्ट इति । वाक्यवाक्यार्थयोरखण्डत्वपक्षे त्वपोद्धारसमा-श्रयणेन पदपदार्थविभागमुपकल्प्य प्रसिद्ध्यप्रसिद्धिनिमित्तको गौणमुख्यविभागोऽभ्युपगन्तव्य इति।

केचित्तु धर्माणां न्यूनाधिकभाव एव गौणमुख्यविभागकारणमित्यभ्युपगच्छन्ति। तथाहि–यत्राधिकं जाड्यादिकं स मुख्यो गोपदार्थस्तद्वाचको गोशब्दो मुख्यः। यत्र तु वाहीकादौ ततो न्यूनं जाड्यादिकं स गौणो गोपदार्थस्तद्वाचको गोशब्दो गौण इति।

केचित्तु सादृश्यमेव गौणमुख्यव्यवहारनिमित्तमिच्छन्ति। तथाहि—गोशब्दो गोत्वजातिं विनाऽपि तदाश्रयव्यक्तिगतजाड्यादिगुणसादृश्याद् वाहीके प्रयुज्यत इति सादृश्यमेव स्वसत्त्वासत्त्वाभ्यां तत्र गौणमुख्यव्यवहारे निमित्तं भवतीति।

अन्ये त्वतस्मिंस्तद्भावाध्यारोपरूपं विपर्यासमेव शब्दस्य गौणमुख्यव्यवहारे निमित्तमिच्छन्ति। अतस्मिंस्तद्भावाध्यारोपो द्विधा। आहार्योऽनाहार्यश्च। तत्रातस्मिंस्तद्भावबाधदर्शने सति इच्छाप्रयुक्त आहार्यः। यथा गौर्वाहीक इति। बाधदर्शनाभावे त्वनाहार्यः स्वाभाविकः। यथा शुक्तिकायां रजतमिति प्रयुज्यते, स गौणः।

केचिद् वदन्ति–रूपनिमित्तकः शक्तिनिमित्तकश्च गौणमुख्यव्यवहार इति। तथाहि—यत्र सास्नादिमद् रूपं दृश्यते तत्र मुख्यो गोशब्दः। अन्यत्र गौणः। किञ्च यत्र दोहनवहनादिसाधनत्वरूपा शक्तिर्दृश्यते तत्र गोशब्दो मुख्यः, अन्यत्र तु गौण इति। नन्वेवं यद्यपि गोऽभवत्, त्वद्भवति इत्यादौ च्व्यन्ते गौणार्थत्वे व्यवस्थिते गौणमुख्यन्यायप्रवृत्त्या यथायोगं प्रगृह्यसंज्ञाया अभावः, मध्यमपुरुषाभावश्चेतीष्टद्वयमपि सिद्धम्; तथापि 'महद् भूतश्चन्द्रमाः' इत्यत्र चन्द्रमसः पूर्णिमायां महत्त्वस्य वास्तवस्य सद्भावादनारोपितत्वमित्यत्र मुख्यार्थकस्य महच्छब्दस्य 'आन्महतः' इत्यादिना प्राप्नोत्येवात्वमिति चेन्न। अत्रापि महच्छब्दस्य गौणत्वात्। तथाहि–यद्यप्यत्र पूर्णिमायां चन्द्रमसो महत्त्वं तथ्यमेव विद्यते, तथाप्यत्र च्व्यन्तेन महत्पदेन च्वितद्धितवृत्त्या चन्द्रमसः पूर्वावस्थारूपा प्रकृत्यवस्थैव विशेष्यतया प्राधान्येनोन्मज्जद्रूपोच्यते। उत्तरावस्था तु तत्राध्यारोपिताऽप्राधान्येन विशेषणतया निमज्जद्रूपोच्यत इति तत्र प्रकृतौ महत्त्वस्यारोपितत्वान्न भवति महद्भूतश्चन्द्रमा इत्यत्र च्व्यन्ते महच्छब्दस्यात्वमिति। तदुक्तं हरिणा—

महत्त्वं शुक्लभावं च प्रकृतिः प्रतिपद्यते।
भेदेनापेक्षिता सा तु गौणत्वस्य प्रयोजिका॥ इति॥

( वा. का. २। २८० )

नन्विहाग्निसोमादयः शब्दा देवतावाचकाः, तेजस्वित्वाह्लादकत्वादिगुणसादृश्येन माणवकादावध्यारोपितशब्दस्वरूपनिमित्तकास्च, पित्रादिसङ्केतेन समध्यारोपितशब्दस्वरूपनिमित्त-

काश्च संज्ञाभूतार्थवृत्तय इति त्रिविधाः सम्भवन्ति। तत्र देवतायां संज्ञासु चैते मुख्यार्था एव, मुख्यार्थबाधाप्रतिसन्धानपुरःसरं सादृश्याद्यप्रतिसन्धानपुरःसरञ्च प्रवृत्तेरित्यग्निसोमौ माणवकावित्यत्र 'अग्नेः स्तुत्स्तोमसोमाः' (८।३।८२) इति षत्वं कस्मान्न भवतीति चेन्न। अत्राप्यग्निशब्दस्याप्रसिद्ध्या गौणत्वात्। तदुक्तमभियुक्तैः—

अभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुताः।
शास्त्रार्थस्तेषु कर्त्तव्यः शब्देषु न तदुक्तिषु॥ इति।

यत्र तु सादृश्यमूलकेनातस्मिंस्तद्भावाध्यारोपेण अग्निसोमादयः शब्दा माणवकेषु प्रयुज्यन्ते, तत्र तु स्फुटैव गौणार्थता तेषामिति बोध्यम्।

ननु ऋषौ 'हरिश्चन्द्रः' इति भवति अन्यत्र तु हरिचन्द्र इति। तथा च सुड्विधायकं पाणिनीयं सूत्रम् 'प्रस्कण्वहरिश्चन्द्रावृषी' (६।१।१५३) इति। एवञ्च 'हरिश्चन्द्रो माणवकः' इति प्रयोगो न स्यात्। दृश्यते हरिश्चन्द्र-ऋषिगतगुणसंदर्शनेन माणवकेऽपि साक्षाद् हरिश्चन्द्रोऽयमिति सुड्घटितो गौणः प्रयोग इति चेन्न। ऋषिगुणसंदर्शनेन माणवके तत्त्वाध्यारोपेण ऋषिवाचकस्य प्रयोगे सुट औचित्यात्। ऋषौ संस्कृतस्य, माणवके गौणे प्रयोगे जातस्य संस्कारस्य निवृत्त्ययोगात्। 'जातसंस्कारो न निवर्तते' इति वैयाकरणसमयात्। अत एव 'सिंहो माणवकः' इत्यादौ पूर्वं प्रातिपदिकार्थमात्रे जातायाः प्रथमायाः पदान्तरसंबन्धे प्रातिपदिकार्थ-व्यतिरिक्तसादृश्यभानेऽपि न निवृत्तिरिति वैयाकरणाः। तथा च ऋषेरन्यत्र यदा हरिश्चन्द्र-शब्दस्य ऋषिगुणसंदर्शनेन प्रयोगस्तदा सुड् भवति। यदा तु षष्ठ्यर्थबहुव्रीहिमाश्रित्य योगदर्शनेन प्रयोगस्तदा स न भवतीत्येवं सुटो भावाभावयोरसांकर्यं दर्शितं हरिणा—

ऋष्यादौ प्राप्तसंस्कारो यः शब्दोऽन्येन युज्यते।
तत्रान्तरङ्गः संस्कारो बाह्येऽर्थे न निवर्तते॥ इति।

(वा० प० २। २८४)

ननु यच्छब्दान्वयानुविधायित्वं यदर्थबोधस्य तदर्थस्य तच्छब्दवाच्यत्वमित्येवंरूपो न्यायः 'शब्दवत्तूपलभ्यते तदागमे हि दृश्यते तस्य ज्ञानं यथान्येषाम्' इति मीमांसासूत्रेण निर्धारितः; ततश्च बौद्ध एव शब्दार्थः, यो यच्छब्दोच्चारणे बुद्ध्यारूढो भवति; अतो नास्ति कश्चिच्छब्देषु गौणमुख्यविभागः, गौणत्वेनाभिमतस्याप्यर्थस्य तच्छब्द-प्रयोगे बुद्ध्यारोहेण मुख्यत्वादिति चेन्न। बुद्ध्योर्यथार्थत्वायथार्थत्वाभ्यां मुख्यगौणविभागो-पपत्तिसंभवात्। तथाहि—रजते रजतबुद्धिः सत्येति तत्र रजतशब्दप्रयोगो मुख्यः। शुक्तिकायान्तु

सा असत्येति तत्र रजतशब्दप्रयोगो गौण इति। तदेतन्महता संरम्भेण प्रपञ्चितं हरिणा द्वितीयकाण्ड इति तत एवावधेयम्।

तदेवमर्थप्रत्यायनाय लोके प्रयुज्यमानाः शब्दा लोकव्यवहारनिमित्तभूता मुख्येऽर्थे प्रसिद्ध्याऽबाधेन चास्खलद्गतित्वेन, गौणे चार्थेऽप्रसिद्ध्या बाधेन च स्खलद्गतित्वेन प्रवर्तमाना गौणमुख्यविभागं प्रयोजयन्तीत्येवं बौद्धः शब्दार्थ इत्यभ्युपगमेऽपि व्यवस्थित एव गौणमुख्यविभाग इति। तदेवं वाक्यवाक्यार्थयोरखण्डत्वे वर्ण्यत्वेन प्रस्तुतेऽपि वाक्यार्थावगमायापोद्धारकल्पनया गौणमुख्यन्यायोपयोगी पदार्थानां गौणमुख्यविभागः, सत्यासत्यविभागश्च दर्शितः।

साम्प्रतं तदवगमाय शास्त्रप्रवृत्तये च पदार्थानां विविधा गतयः प्रदर्श्यन्ते। तद्यथा—मुख्यद्योत्यविभागः, विवक्षिताविवक्षितत्वविभागः, गुणप्रधानभावः, गुणप्रधानभावविपर्ययः, पदार्थैकदेशाविवक्षा सकलपदार्थाविवक्षा, उपात्तपदार्थापरित्यागेनान्यार्थोपलक्षणमिति। ततः प्राक् च पूर्वं प्रक्रान्त एव मुख्यनान्तरीयकार्थविचारः सावशेष इदानीं निःशेषः क्रियते। इह यदर्थप्रतिपादनाय यः शब्दः प्रयुज्यते सोऽर्थः तस्य प्रयोजक इति मुख्य उच्यते। तदर्थप्रतिपादनावसरे च तदर्थसनिहितं यमन्यमर्थं प्रत्याययति सोऽर्थस्तस्य शब्दस्य नान्तरीयक उच्यते। तथा च शब्दस्य मुख्यार्थनान्तरीयकार्थप्रतिपादकत्वे ज्ञापकदृष्टान्तो दर्शितो हरिणा—

घटादिषु यथा दीपो येनार्थेन प्रयुज्यते।
ततोऽन्यस्यापि साचिव्यात् स करोति प्रकाशनम्॥
संसर्गिषु तथाऽर्थेषु शब्दो येन प्रयुज्यते।
तस्मात् प्रयोजकादन्यानपि प्रत्याययत्यसौ॥ इति।

(वा० प० २।२९८-९९)

अयं भावः—यथा प्रदीपो घटप्रकाशनाय कृतो नान्तरीयकतया स्थितं पटादिकमपि संनिधानात् प्रकाशयति, तथा सिद्धं धात्वर्थमभिधातुं प्रयुक्तो भावसामान्यवाची भावशब्दः, तद्विशेषवाची पाकादिशब्दो वा स्वमुख्यमर्थमभिदधत् तत्र नान्तरीयकतया स्थितान् लिङ्गसंख्यादिकानप्यर्थान् प्रत्ययविशेषविभक्तिविशेषसन्निधानात् व्यञ्जनया प्रत्याययतीति। इदमेकं द्विकं वा प्रातिपदिकार्थ इति पक्षे बोध्यम्। त्रिकं चतुष्कं पञ्चकं वा प्रातिपदिकार्थ इति पक्षे तु लिङ्गसंख्यादेरपि मुख्यार्थत्वमेव। तदा तु प्रत्ययविशेषविभक्तिविशेषयोस्तदर्थद्योतकत्वमेवेति ध्येयम्।

बौद्धः शब्दो बौद्धस्यार्थस्य कारकः प्रकाशकश्चेति पक्षे कारकहेतुरूपो दृष्टान्तो दर्शितो हरिणा—

निर्मन्थनं यथाऽरण्योरग्न्यर्थमुपपादितम् ।
धूममप्यनभिप्रेतं जनयत्येकसाधनम् ॥
तथा शब्दोऽपि कस्मिंश्चित् प्रत्याय्यार्थे विवक्षिते ।
अविवक्षितमप्यर्थं प्रकाशयति सन्निधेः ॥ इति ।
( वा० प० २। ३००-३०१ )

एवं मुख्यनान्तरीयकयोरुभयोरर्थयोः शब्दप्रकाश्यत्वेऽपि प्रयोजकस्यैव वक्तृतात्पर्यविषयत्वादुपयोगित्वाच्च वाच्यत्वम् । नान्तरीयकस्य तु द्योत्यत्वमिति स्थितम् ।

एवं प्रयोजकस्यार्थस्य वाच्यत्वे नान्तरीयकस्य चावाच्यत्वे स्थिते क्वचिद् गुणप्रधानभावविपर्ययः, क्वचित् पदार्थैकदेशाविवक्षा, क्वचित् सकलपदार्थाविवक्षा, क्वचिदुपात्तपदार्थापरित्यागेनान्यार्थोपलक्षणमिति प्रकारचतुष्टयं शास्त्रे दृष्टमुपपन्नं भवतीति युग्मेन दर्शितं हरिणा—

क्वचिद् गुणप्रधानत्वमर्थानामविवक्षितम् ।
क्वचित् सान्निध्यमप्येषां प्रतिपत्तावकारणम् ॥
यच्चानुपात्तं शब्देन तत् कस्मिंश्चित् प्रतीयते ।
क्वचित् प्रधानमेवार्थो भवत्यन्यस्य लक्षणम् ॥ इति ।
( वा० प० ३०४-३०५ )

अत्र प्रथमपद्यं पूर्वार्धस्योदाहरणम्-आक्षिक इति । तथाहि—आक्षिक इत्यादौ अक्षकरणकदेवनकर्त्ता इत्येवमर्थानां गुणप्रधानभावेऽबाधितेऽनुभूयमाने 'तेन दीव्यति' इति लक्षणोक्तोऽर्थानां गुणप्रधानभावोऽविवक्षितो भवतीति । द्वितीयार्धस्य तूदाहरणम्-भावे (३।३।१८) इति सूत्रे मुख्यार्थसन्निधानात् प्रतीयमानोऽपि पुंस्त्वैकत्वादिरूपो नान्तरीयकोऽर्थः पाकपदादौ प्रतिपत्तिद्वारा व्यवहाराङ्गं न भवति । पाकौ पाकाः, कृतिः कृतमित्यादौ च पुंस्त्वैकत्वयोरप्रतीतेरव्यवहाराच्चेति । द्वितीयपद्यपूर्वार्धस्योदाहरणम् 'तस्यादित उदात्तमर्धह्रस्वम्' (१।२।३२) इति । अत्रार्धह्रस्वशब्दस्य वाच्योऽर्थो नोपादीयते, तात्पर्याविषयत्वेनाप्रयोजकत्वात्, किन्तु तात्पर्यविषयत्वेन प्रयोजको वाच्यार्थाविनाभावी लक्ष्यार्थ एव नान्तरीयकस्तात्पर्यानुपपत्तिकल्प्य उपादीयत इत्येवमर्धह्रस्वपदे वाच्यस्य सकलस्याप्यर्थस्य कर्मधारयलभ्यस्य एकदेशिसमासलभ्यस्य वाऽविवक्षा, लक्ष्यार्थस्य चार्धमात्रारूपस्य विवक्षा दीर्घस्वरितादावपीति । द्वितीयपद्योत्तरार्धस्योदाहरणन्तु-'विध्यत्यधनुषा' इत्यत्र धनुःपदं करणसामान्यस्योपलक्षणम् । तेन 'चोरं विध्यति खड्गेन' इत्यत्रापि यत्प्रत्ययो नेत्येवं वाच्यार्थस्यान्यार्थोपलक्षणत्वेनाप्राधान्यमिति रीत्या मुख्यार्थनान्तरीयकार्थयोः शाब्दे व्यवहारे प्रकारचतुष्टयं प्रदर्शितम् । तत्र च विवक्षैव नियामिकेति बोध्यम् ।

अथात्रेदं गौणमिदं मुख्यमिदं नान्तरीयकमित्येवं शब्दार्थौ यत्र निर्णीयेते, तत्र तन्निर्णयोपायाः सप्त दर्शिता हरिणा—

वाक्यात् प्रकरणादर्थादौचित्याद् देशकालतः।
शब्दार्थाः प्रविभज्यन्ते न रूपादेव केवलात्॥ इति।

( वा० प० २। ३१४ )

तत्र वाक्याच्छब्दार्थनिर्णयो लोके यथा—कटं करोति भीष्ममुदारं दर्शनीयमिति। अत्र केवलस्यैव कटस्य करोतिक्रियया संबन्ध इत्येकः पक्षः। द्वितीयस्तु भीष्मादिगुणान्वितस्य कटस्य क्रियासम्बन्ध इति। उभयोरपि पक्षयोर्वाक्यरूपा श्रुतिस्तुल्यैव। तथा च तुल्यायामपि श्रुतौ यदा कटस्यैव करोतिक्रियया संबन्धः, तदा द्रव्यस्य निर्गुणस्यानुपपत्तेर्गुणानाञ्च निरधिकरणानामसम्भवात् परस्पराकाङ्क्षया तद्वाचकपदयोरेकार्थवाचकत्वरूपं सामानाधिकरण्यं वाक्यीयात् समन्वयात् इति भीष्मगुणान्वितस्यैव कटस्य करणं पार्ष्ठिको वाक्यार्थः संपद्यते। उक्तञ्च—

आश्रयाश्रयिणोर्वाक्यान्निर्णयस्त्ववतिष्ठते। इति।

( वा० प० २। )

अयमर्थः—आश्रयः कटः, आश्रयी भीष्मादिको गुणस्तयोः संबन्धनिर्णयः पदद्वयसमभिव्याहाररूपाद् वाक्यात् पर्यवस्यतीति। शास्त्रे च 'कर्मणि द्वितीया' ( २।३।२ ), 'द्वयेकयोर्द्विवचनैकवचने', ( १।४।२२ ) 'अनभिहिते' ( २।३।१ ) इत्यादिसूत्रघटितानि पृथगेव प्रकरणानि विरचितानि। तत्र भिन्नदेशस्थत्वेन प्रकरणभेदे सत्यपि तात्पर्यालोचके श्रोतरि सति प्रातिपदिकादनभिहिते कर्मादौ यदेकत्वादि, तत्र द्वितीयाद्या विभक्तयो भवन्ति, इत्यर्थस्य संगतेराकाङ्क्षादिवशाद् महावाक्यनिष्पादको वाक्यानां परस्परं सम्बन्धोऽर्थनिश्चयाय पर्यवस्यति। तदुक्तं च—

स्वार्थबोधे समाप्तानामङ्गाङ्गित्वव्यपेक्षया।
वाक्यानामेकवाक्यत्वं पुनः संहत्य जायते॥ इति।

( वा० का० २। )

तदेवं शास्त्रे वाक्याच्छब्दार्थनिर्णयः। तथा शब्दातिरिक्तं प्रकरणमपि शब्दार्थनिर्णयनिमित्तं भवति। तद्यथा—लोके संग्रामप्रस्तावे सैन्धवमानयेति सैन्धवानां चोदनमश्वानयनपर्यवसायि भवति। भोजनप्रस्तावे तु तदेव लवणप्रतीतिमुपजनयतीति। व्याकरणशास्त्रे यथा—धातुप्रकरणाद् धातुर्भ्वादिरित्युक्तम्, न तु ताम्रादिः कफादिर्वा। तथा करणशब्देन क्रियाकारकयोरुभयोरप्यवगतौ सत्यां कर्तृकरणयोस्तृतीयेत्यत्र कारकाणां प्रक्रान्तत्वात् करणशब्देन क्रिया-

ग्रहणं न विज्ञायते, शब्दवैरेत्यादिसूत्रे च धात्वधिकारेण करणशब्दात् क्रिया प्रतीयत इति। अर्थस्तु शब्दाभिधेयत्वात् स्ववाचकसमभिव्याहृतशब्दार्थनिर्णयं प्रकल्पयति। तद्यथाऽन्यत्र-- अञ्जलिना जुहोति, अञ्जलिना सूर्यमुपतिष्ठते, अञ्जलिना पूर्णपात्रमाहरति इत्यत्र जुहोतीत्यादिपदार्थवशाद् विभिन्नाकारार्थवाचकोऽञ्जलिशब्दः। शास्त्रेऽपि पूरणगुणसुहितार्थेत्यत्र गुणेन सह षष्ठी न समस्यते, इत्यत्र समासयोग्यषष्ठयन्तपदार्थसामर्थ्याददेङामसंप्रत्ययः। तथा 'न शसदद-वादिगुणानाम्' इत्यत्र समभिव्याहृतपदार्थसामर्थ्यादेवादेङां संप्रत्ययो भवति, न तु द्रव्यसमवेतानां गुणानामिति। औचित्यादपि शब्दार्थव्यवस्था दृश्यते। यथा लोके सीरासिमुसलशब्दैस्तृतीयान्तैरसमभिव्याहृतक्रियापदैरपि स्वस्वक्रियौचित्याद् विलेखनयुद्धावहननरूपसमुचितक्रियापदाक्षेपे सति शब्दार्थनिर्णयः पर्यवस्यति। यथा वा प्रष्ठादयः शब्दा अग्रगामित्वादिरूपनिमित्तसमाश्रयणेन प्रवर्तन्ते, तस्य च निमित्तस्य पुंस्येवौचित्येन संभवात् पुंवाचकास्ते शब्दा उच्यन्ते। दांपत्यरूपात् पुंयोगाच्च ते शब्दाः स्त्रियां वर्तन्ते, न तु साक्षादिति प्रष्ठस्त्र्यादिषु प्रष्ठसंबन्ध एव प्रष्ठादिसंशब्दानाम् 'पुंयोगादाख्यायाम्' इत्यनेन निमित्तत्वेनोपदर्शितः। लोकेऽपि—

यश्च निम्बं परशुना यश्चैनं मधुसर्पिषा।
यश्चैनं गन्धमाल्याद्यैः सर्वकटुरेव सः॥

इत्यत्रानुक्ततत्तत्क्रियापदानि परश्वादीनि साधनान्येवौचित्यवशात् स्वस्वसमुचिताच्छिनत्तीत्यादिक्रियापदावगत्या यश्च निम्बं परशुना छिनत्तीत्याद्यवान्तरवाक्योपप्लावनप्रत्यायनपूर्वकमप्रस्तुतनिम्बवृत्ताकीर्तनेन प्रस्तुतखलनिन्दारूपस्याप्रस्तुतप्रशंसालक्षणस्य महावाक्यार्थस्य प्रतीतिमुपजनयन्ति। तथा च यो निम्बं परशुना छिनत्ति, यश्चैनं गन्धेनानुलिम्पति, सर्वं तं प्रति तस्य दुस्त्यजा प्रकृतिरिति कृत्वा कटुरेव दौर्मनस्यदाननिपुण एवेति कस्यचित् खलत्वप्रतिपादनमत्र तात्पर्याख्यवृत्त्या महावाक्यार्थः। देशाच्छब्दार्थनिर्णयो यथा—मथुरायाः प्राचीनादुदीचीनाद्वा नगरादागच्छामीत्युक्ते नगरविशेषात् पाटलिपुत्रादेरागच्छामिति गम्यते। पाटलिपुत्रस्य मथुरासंबन्धिनोश्च प्राचीनोदीचीनभागयोः सन्निधिरस्तीति कृत्वा प्राचीनोदीचीनरूपदेशवशादत्र नगरविशेषनिर्णयः। कालादपि शब्दार्थव्यवस्था दृश्यते। यथा शिशिरे-द्वारमित्युक्ते 'पिधेहि' इति, ग्रीष्मसमये त्वेवमभिधाने समुद्घाटय' इति गम्यते। एष च शब्दार्थनिर्णयोपायानां दिङ्निर्देशः।

यतोऽन्येऽपि शब्दार्थनिर्णयोपायाः पूर्वजैरुपदर्शिता दर्शिताः हरिणा—

संसर्गो विप्रयोगश्च साहचर्यं विरोधिता।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः॥

सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः ।
शब्दार्थस्यानवच्छेदे　　विशेषस्मृतिहेतवः　॥ इति ।

( वा० प० २।३१६ )

एतेषां चोदाहरणानि तत्र तत्र मञ्जूषादिषु प्रदर्शितानि प्रसिद्धान्येवेति तत एव द्रष्टव्यानि। अत्र तु ग्रन्थविस्तारभयान्नोपदर्श्यन्ते । तदेवं शब्दैक्यवाद इव शब्दानेकत्ववादेऽपि रूपसाम्येन शब्दैक्यविपर्यासादर्थसंशयसंभवात् प्रकरणादिभिरेवार्थनिर्णयो न तु केवलाद् रूपादित्यवधेयम्। यद्यपि द्वारमित्युक्तौ पिधेहीति पदाध्याहारः पिधेहीत्याज्ञातपदमात्रोक्तौ वा द्वारमिति पदाध्याहारस्तदर्थाध्याहारो वा मीमांसकैरुच्यते, तथापि स न युक्तः; तत्र द्वारमित्यस्य पिधेहीत्यस्यैव वा वाक्यार्थवाचकत्वेन वाक्यत्वात् । तथाहि—लोकव्यवहारे यस्मादुच्चारिताच्छब्दाद् यस्यार्थस्य प्रत्ययो दृश्यते, तस्यैव शब्दस्य तमर्थमाहुः । द्वारमित्यस्मादेव चार्थप्रकरणादिना द्वारं पिधेहीति वाक्यार्थप्रतीतेर्द्वारमित्येतदेव वाक्यार्थवाचकत्वाद् वाक्यमिति ।

एवं सति "क्रियार्थोपपदस्य च कर्मणि स्थानिनः" (२।३।१४) इति सूत्रं 'फलेभ्यो याति' इत्यादौ चतुर्थीविधानार्थं नारम्भणीयम् । तादर्थ्यचतुर्थ्यैव गतार्थत्वात् । एवञ्च कृत्वा निष्कौशाम्बिरित्यादिवृत्तौ निरादय एव क्रान्ताद्यर्थप्रतिपादका इति सिद्धं भवति । अन्यथा तत्रापि क्रान्तादिपदानां तदर्थानां वाऽध्याहारः कल्प्येत । न चैतद् युक्तम्, वृत्तौ क्रान्तादिपदानां सर्वथाऽप्रयोगस्यैव सर्वसम्मतत्वात् । तदेतदुक्तं हरिणा—

यस्मिंस्तूच्चारिते शब्दे यदा योऽर्थः प्रतीयते ।
तमाहुरर्थं तस्यैव नान्यदर्थस्य लक्षणम् ॥
क्रियार्थोपपदेष्वेवं स्थानिनां गम्यते क्रिया ।
वृत्तौ निरादिभिश्चैव क्रान्ताद्यर्थोऽवगम्यते ॥ इति ।

( वा० प० २।३२८-२६ )

द्वितीयपद्यस्यायं भावः—वृत्तौ निष्कौशाम्बिरित्यादौ निरादय एव सामर्थ्यात् क्रान्ताद्यर्थप्रतिपादका इति गतार्थत्वाद् वृत्तौ क्रान्तादिशब्दानामप्रयोग एवेति । उक्तञ्च—उपसर्गा ह्येवमात्मका यत्र क्रियावाची शब्दः श्रूयते तत्र क्रियां विशिषन्ति, अन्यत्र क्रियाविशिष्टं साधनमाहुरिति ।

आद्यस्योदाहरणं निष्क्रामन्ति इति । अत्र क्रमधातोः क्रमणरूपं गमनसामान्यमर्थः; निरुपसर्गस्य तु बहिर्गमनरूपं निष्क्रमणं गमनविशेषोऽर्थः । ततश्च विशेषणोपसर्गार्थेन धात्वर्थरूपं सामान्यं विशेष्यते । तथा च निष्क्रामन्तीत्यस्य निष्क्रमणाभिन्नं क्रमणं कुर्वन्तीत्यर्थः । द्वितीयस्योदाहरणं तु—निष्कौशाम्बिरिति । अत्र निरुपसर्गो निष्क्रमणक्रियाकर्माह—निष्क्रान्त इत्यर्थे निरुपसर्गोऽत्रेति यावदिति ।

ननु यद्येवं द्वारं पिधेहि, निष्क्रान्तः कौशाम्ब्या इत्यादौ पिधेहीत्यादीनां प्रयोगस्य किं प्रयोजनम्? केवलं द्वारमित्यादिकं नामपदमेव, पिधेहीत्यादिकमाख्यातपदमेव वा केवलं सर्वत्र प्रयुज्यताम्। एवं निरादिरुपसर्ग एव केवलं सर्वत्र प्रयुज्यताम्, किं वाक्ये क्रान्तादिपदप्रयोगेण? केवलैरेव सर्वत्र वाक्यार्थप्रतिपादनादित्याशङ्क्य समाहितं हरिणा—

तानि शब्दान्तराण्येव पर्याया इव लौकिकाः।
अर्थप्रकरणाभ्यां तु तेषां स्वार्थो नियम्यते ॥ इति।
( वा० प० २।३३० )

अयं भावः—यद्यपि केवलं द्वारमिति नामपदं पिधेहीत्याख्यातपदं वा केवलं वाक्यार्थ-प्रतिपादकमन्यदेव, द्वारं पिधेहीति पूर्णं वाक्यं त्वन्यदेव, तथापि सादृश्याद् द्वारं पिधेहीति पूर्णवाक्यगतं द्वारपदं द्वारमित्येकपदे वाक्येऽभिमन्यत इति।

द्वारमित्यादौ पिधेहीत्यादिपदाध्याहारस्तदर्थाध्याहारो वेति मीमांसकपक्षस्तु सर्वथा न युज्यते। तथाहि—लोके द्वारमित्युक्तौ द्वारगतं कर्मत्वं पिधानक्रियां विनाऽनुपपद्यमानं तद्वाच-कपिधेहिशब्दपरिकल्पनद्वारेण पिधानक्रियां गमयतीत्युच्यते। तदत्र किं शब्देन शब्द आक्षिप्यते, उतार्थेन शब्दः, अथवा शब्देनार्थः, उतार्थेनार्थः? इति चत्वारः प्रकाराः। तत्राद्यो न युज्यते; स्वार्थं प्रतिपाद्यैव शब्दाक्षेपसंभवात्। तथा च न शब्दाच्छब्दाक्षेपसंभवः, अर्थप्रतिपत्त्या व्यवधा-नादिति। नापि द्वितीयः; अन्यशब्दार्थस्य शब्दान्तरस्य च वाच्यवाचकताविरहादर्थेन शब्दस्या-क्षेपासंभवात्। यदि तृतीयः पक्ष उच्यते, तथाहि—द्वारशब्देनोच्चरितेनार्थः प्रतीयते, तेन च श्रुतार्थापत्तिसहकारेण पिधेहिशब्दः परिकल्प्यते, तेन च तद्वाच्योऽर्थः प्रतीयत इत्येवंरीत्या शब्देनोच्चरितेन श्रुतार्थापत्तिपरिकल्पितशब्दवाच्योऽर्थ आक्षिप्यत इत्युच्यते, तदप्यनुपपन्नम्; शब्दाच्छब्दान्तरवाच्यस्यार्थस्य वाच्यवाचकभावाभावेन सन्निध्यनुपपत्तेः।

एवं कृत्वा चतुर्थः पक्षः परिशिष्यते—अर्थेनार्थ आक्षिप्यते इति। तदेतदनुमानमेवेति स्पष्टम्। एतत्पक्षाङ्गीकारे च द्वारमिति केवलं पदम् 'द्वारं पिधेहि' इति वाक्यार्थे शक्तमिति पक्ष एव परित्यक्तः स्यादखण्डवाक्यवाक्यार्थवादिना। यतोऽस्मिन् पक्षे नासौ द्वारशब्दस्यार्थः, किन्तु तदर्थेनानुमित इति चतुर्थपक्षस्यौचित्याद् नासौ प्रत्याख्यातस्तेन। किञ्च अर्थेनार्थोऽनुमीयत इति पक्षो न कस्यापि वादिनः पक्षं प्रसाधयति प्रदूषयति वेत्यनुपयोगात् स न प्रत्याख्यातः, किन्तूपेक्षित इति।

एवं पक्षत्रयासंभवादेकपदेषु श्रुतार्थापत्त्या शब्दान्तराक्षेपे तत्तद्वाक्यार्थावगतिरिति श्रुतार्थापत्तिवादिपक्षो न युक्त इत्येकपदमेव शब्दान्तरसम्बन्धं विनैव प्रकरणादिवशात् तत्तदर्थप्रत्यायकमित्यखण्डवादिपक्ष एव युक्त इति।

किञ्च, यद्यर्थेनार्थ आक्षिप्यते, तदाऽऽक्षिप्तस्य वृत्त्याऽनुपस्थितस्यार्थस्य कथं शाब्दबोधे भानमिति विचार्यम्। वाक्यवाक्यार्थयोरखण्डत्वपक्षे च स्थिते नामाख्यातोपसर्गनिपाताश्चेति पद-चतुष्टयविभागो नाभ्युपेयतेऽखण्डवादिना। नाभ्युपेतश्च वार्त्ताक्षौदुम्बरायणाभ्यामप्याचार्याभ्याम्। लोके शास्त्रे च पदपदार्थव्यवहारोऽपोद्धारकल्पनया समाश्रितः कार्यार्थमिति न स सत्य इति लौकिकानां पदपदार्थविभागाश्रयेण तत्तत्पदार्थेषु प्रवृत्तिनिवृत्ती, हानोपादानोपेक्षाबुद्धयश्चोपपद्यन्ते। ज्ञापकगम्यश्चार्थः सर्वत्र वाक्यादेवावगम्यते, न तु वाक्यैकदेशात्। तद्यथा वेदे—"अक्ताः शर्करा उपदधाति" इत्यत्र 'तेजो वै घृतम्' इति घृतस्तुतिरूपाल्लिङ्गाद् व्यज्यमानोऽनुमीयमानो वा ऽर्थो घृतेनाक्ताः शर्करा उपदधातीत्येवंरूपः 'अक्ताः शर्करा उपदधाति' इति वाक्यादेवावगम्यते, न त्वक्ता इति वाक्यैकदेशात्. तस्य 'घृतेनाक्ता इति' 'तैलेनाक्ता इति' अर्थयोः स्वरूपाभेदेन व्यवस्थया तदर्थबोधकत्वासंभवात्। वाक्यार्थज्ञानस्यैव प्रवर्तकतया घृतस्तुतेस्तादृशवाक्यार्थ-स्तुतावेव पर्यवसानाच्च।

एवं शास्त्रेऽपि "वाह ऊठ्" ( ६।४।१३२ ) इत्यूठ्ग्रहणरूपज्ञापकगम्योऽर्थोऽन्तरङ्गशा-स्त्रविषयाविषयकत्वविशिष्टः स्वार्थो बहिरङ्गशास्त्ररूपेभ्यो वाक्येभ्य एव प्रतीयते, न तु तद्घटक-पदेभ्यः, पदानां तदर्थान्यार्थयोः स्वरूपाभेदादिति। एवं लोकेऽपि "यो राजानं सेवते, स सारं भुङ्क्ते" इति राजस्तुतिरूपाल्लिङ्गात् सूच्यमान इष्टकृत्वाद् राजा सेवितव्य इत्यर्थो 'राजा सेवितव्यः' इति वाक्यस्यैवार्थः, न तु राजपदस्यार्थ इति। एवं रीत्या विचार्यमाणे सति न सन्ति वाक्येषु वाक्यैकदेशा इति निश्चीयते।

किञ्च, लक्ष्यैकचक्षुष्काणाम् "कर्मण्यण्" (३।२।१) इत्यस्मादुत्सर्गवाक्यात् कर्मण्युपपदे बाधकानाक्रान्तधातुभ्योऽण् प्रत्ययो भवतीत्येव बोधोऽपवादशास्त्रदर्शनात् प्रागपि। तेनायं वाक्यार्थ एतद्वाक्यस्यैव, न त्वेतद्वाक्यैकदेशस्येति स्फुटमवगम्यते। लक्षणैकचक्षुष्काणां त्वपवादशास्त्रदर्शनात् प्राक् कर्मण्युपपदे धातुभ्योऽण् प्रत्ययो भवतीत्यसंकुचितवाक्यार्थबोधेऽ-प्यपवादशास्त्रदर्शनोत्तरं प्रागुपदर्शितः संकुचितार्थविषयको वाक्यार्थबोध इति सर्वथोत्सर्ग-वाक्यानां बाधकानाक्रान्तविषयक एव वाक्यार्थबोधः। स च वाक्यादेव, न तु वाक्यैकदेशादिति वाक्ये वाक्यैकदेशकल्पनाऽप्रामाणिक्येवेति।

एवं वस्तुतो वाक्यानामखण्डत्वेऽप्यपोद्धारकल्पनया वाक्येषु वाक्यैकदेशाः सन्तीति चतुर्भिः प्रकारैर्निरूपितम्। अर्थप्रकरणाभ्यां यथा—वृक्ष इत्यादौ तिष्ठतीत्यादिः। प्रसिद्धेर्यथा—वर्षतीत्यादौ जलमित्यादिः। लिङ्गाद् यथा—अक्ताः शर्करा उपदधातीत्यादौ घृतस्तुतिरूपाद् लिङ्गाद् घृतेनाक्ता इति। आकाङ्क्षादिना वाक्यान्तरस्य सन्निधानाद् यथा लोके—'दधि ब्राह्मणेभ्यो दीयताम्,

तक्रं कौण्डिन्याय' इत्यादौ। यथा च शास्त्रे "कर्मण्यण्, आतोऽनुपसर्गे कः" (३।२।१; ३।२।३) इत्यादौ। वाक्येष्वपोद्धारसमाश्रयणेन वाक्यैकदेशकल्पनावत् पदेष्वप्यपोद्धारसमाश्रयणेन पदैकदेशाः कल्प्यन्ते। यथा देवदत्तादिशब्देषु देवादयो दत्तादयश्च। वस्तुतस्तु स्वतन्त्रा एव संज्ञा देवादयो दत्तादयश्च, न तु पदैकदेशाः, समुदायस्यैव संकेतितत्वादवयवानामसंकेतितानामसंज्ञात्वात्। आनुपूर्वीसाम्येन तु पदैकदेशत्वविभ्रम इति। "विनापि प्रत्ययं पूर्वोत्तरपदयोर्लोपो वा वाच्यः" इति [1]वार्तिकमप्यपोद्धारकल्पनामाश्रित्यैव प्रवृत्तमिति।

किञ्च, यथा स्वघटितसमुदायमनुनिष्पादीनि देवादि-दत्तादिपदानि तादृशसमुदायार्थे विनियुज्यन्ते, न तथाऽपदानां वर्णसमुदायानामनुनिष्पत्तौ दत्तादिपदानामनुनिष्पत्त्या समानायामप्यनर्थका अपदभूता वर्णसमुदाया ज्ये, द्रा, इत्यादयः स्वघटितसमुदायार्थे शास्त्रेण विनियुज्यन्ते, इत्यतो न ज्येष्ठद्राधिष्ठादिषु ज्ये, द्रा, इत्यादयो वर्णसमुदाया वृद्धव्यवहारे शब्दानां साधुत्वे प्रमाणभूते साधुत्वेनाभ्यनुज्ञायन्ते, इत्यतः साधुत्वान्वाख्यायकेन शास्त्रेणापि समुदायैकदेशभूतानां पदानामेव साधुत्वेनानुगमः क्रियते। अतः शास्त्रेणाननुशिष्टत्वान्नैते श्लाघामघादिशब्दैकदेशा घादयो वर्णसमुदाया मघादिशब्दवाच्यानामर्थानां वाचका इति। तदुक्तं हरिणा—

साधारणत्वात् संदिग्धाः सामर्थ्यान्नियताश्रयाः।
तेषां ये साधवस्तेषु शास्त्रे लोपादि शिष्यते॥
तुल्यायामनुनिष्पत्तौ ज्ये द्रा घा इत्यसाधवः।
नह्यन्वाख्यायके शास्त्रे तेषु दत्तादिवत् स्मृतिः॥ इति।

(वा० प० २। ३६०-६१)

अथेदं विचार्यते—इह संज्ञाशब्दानां खरणसादीनां पित्रादिकृतात् संज्ञिसंबन्धात् प्राक् "पूर्वपदात्संज्ञायामगः" (८।४।३) इत्यादिशास्त्रसम्बन्धः, अथवा—तेषां तदुत्तरकालं तद्योग इति संशयः। तत्र यदा तेषां ततः प्राग् लक्षणयोग इति पूर्वः कल्पः तदा तदानीमसौ खरनसादिर्न कस्यचित् संज्ञेति हेतोः संज्ञात्वप्रयुक्तं णत्वादिकार्यं तत्र कथं स्यादिति।

अत्रोच्यते—यत्र संज्ञासंज्ञिसम्बन्धात् संज्ञात्वं भावि, तत्र लक्षणं प्रवर्तत इति। पूर्वपदात्संज्ञायामग इति सूत्रे च संज्ञायां भाविन्यामित्यर्थः स्वीक्रियत इति न काप्यनुपपत्तिरिति। एवमपि—अथ संज्ञासंज्ञिसम्बन्धादुत्तरकालं लक्षणयोग इति द्वितीयकल्पे दोषो दुर्वारः। तदा हि पूर्वमकृतणत्वोऽसौ खरनसादिशब्दः सम्प्रति णत्वं भजत इत्यनित्यत्वं शब्दानां स्यादिति शङ्कायां समाहितं हरिणा —

---

१. ठाजादावूर्ध्वं द्वितीयानचः (५।३।८३) इति सूत्रस्थम्।

कृतणत्वाश्च ये शब्दा नित्यं खरणसादयः ।
एकद्रव्योपदेशित्वात् तान् साधून् सम्प्रचक्षते । इति ।

( वा० प० २ । ३६२ )

अयं भावः —इह संज्ञाशब्दानां द्वौ राशी । कृतणत्वानामेको राशिर्नित्य एव, अकृतणत्वानामपर इति । तत्र ये शब्दाः खरणसादयः कृतणत्वाः, ते तु नित्या एव । किञ्च, ते पित्रादिसङ्केतगोचरीभूतैकद्रव्यवाचकत्वाच्छास्त्रप्रवृत्तिं विना स्वभावेनैव संज्ञाशब्दाः । "पूर्वपदात्संज्ञायामगः" इत्यादिशास्त्राणि तु स्वभावतः कृतणत्वान् तान् साधूनन्वाचक्षत इति न णत्वादिविधिवैयर्थ्यम् । एवञ्च सिद्धानां तेषां साधुत्वान्वाख्यानायैव णत्वादिप्रक्रियासमाश्रयणमिति न कश्चिद् विरोधः । अकृतणत्वास्तु संज्ञायामसाधव इति ।

ननु नित्यत्वं संज्ञाशब्दानामनुपपन्नम् , सम्प्रति क्रियमाणत्वात् । यतो हि पुरुषेच्छया यथाकथञ्चिन्नियुज्य संज्ञाः क्रियन्ते । उक्तञ्च—

कृतकत्वादनित्यत्वं सम्बन्धस्योपजायते ।
संज्ञायाः सा हि पुरुषैर्यथाकामं नियुज्यते ॥
यथा हि पांसुरेखाणां बालकैर्मधुरादयः ।
संज्ञाः क्रियन्ते संज्ञासु सर्वास्वेषैव कल्पना ॥ इति ।

तदेतदाशङ्क्य समाहितं हरिणा—

व्यवहाराय नियमः संज्ञानां संज्ञिनि क्वचित् ।
नित्य एव तु सम्बन्धो डित्थादिषु गवादिवत् ॥ इति ।

( वा० प० २ । ३६४ )

संज्ञाशब्देषु च शब्दस्वरूपातिरिक्तस्य योगलभ्यस्य प्रवृत्तिनिमित्तस्यान्वेषणं नावश्यमिष्यते, खरनासावत्त्वादिरूपयोगार्थरहितेऽपि खरणसादिसंज्ञाशब्दप्रयोगदर्शनात् । क्वचित्तु योगार्थसंभवे सति तमपि प्रवृत्तिनिमित्तीकृत्य संज्ञाशब्दानां प्रयोगो भवत्येव । तदुक्तं कविभिः—

श्रुतस्य यायादयमन्तमर्भक-
स्तथा परेषां युधि चेति पार्थिवः ।
अवेक्ष्य धातोर्गमनार्थमर्थवि-
च्चकार नाम्ना रघुमात्मसंभवम् ॥ इति ।

( रघु० ३ सर्गे )

इह शास्त्रे लोके च संज्ञाशब्दा द्विविधाः—केचिद् रूढाः, केचिद् योगरूढा इति। तत्राद्याः शास्त्रे टिघुभादयः। द्वितीयास्तु कर्मप्रवचनीयसर्वनामसर्वनामस्थानादयः। कर्म क्रियां प्रोक्तवन्तः, कर्मप्रवचनीया इति। सर्वेषां नाम, सर्वनाम इति। सर्वम्—अविकृतं नाम तिष्ठत्यस्मिन्निति सर्वनामस्थानमिति यथायथं तासां संज्ञानां योगः। लोकेऽपि रूढा डित्थडवित्थादयः। योगरूढास्तु शत्रुघ्नबलभद्रप्रलम्बादयः। ता एता द्विविधा अपि संज्ञा यद्यपि स्वरूपमेव प्रवृत्तिनिमित्तं समाश्रित्य स्वार्थेषु प्रवर्तन्ते, तथापि रूढेष्वासां स्वरूपमर्थाननुगतम्, योगरूढेषु त्वर्थानुगतमिति भेदः।

संज्ञाशब्दानाञ्च शास्त्रे ग्रहणविषये चातुर्विध्यं दृश्यते। तथाहि—क्वचिल्लौकिकस्याकृत्रिमस्य ग्रहणं भवति। तद् यथा—"शब्दवैरकलहाभ्र०" (३।१।१७) इत्यादावकृत्रिमा लौकिकी करणसंज्ञा क्रियाबोधिका। अत्र धातोरित्यधिकारेण कृत्रिमायाः प्रातिपदिकनिष्ठायाः करणसंज्ञाया अनुपपत्तेः। 'कर्मण्यण्' इत्यत्र कृत्रिमा संज्ञा शास्त्रीया लक्ष्यानुरोधादेव। क्वचित्तु व्यापकत्वादकृत्रिम एव परिगृहीतः कृत्रिमस्यापि विषयं लक्ष्यं व्याप्नोति। तद्यथा—"संख्याया अतिशदन्तायाः कन्" (५।१।२२) इत्यत्र कृत्रिमाया प्रकरणाद् ग्रहणम्। अकृत्रिमायास्तु अतिशदन्ताया इति पर्युदासादिति। क्वचिदकृत्रिमः संज्ञाशब्द उच्चारितः स्वार्थं प्रत्याययन् कृत्रिमस्याप्यर्थं प्रत्याययति। तद्यथा—"एकश्रुति दूरात् सम्बुद्धौ" (१।२।३३) इत्यत्र सम्बोधनं सम्बुद्धिरित्यर्थकं लौकिकमकृत्रिमं सम्बुद्धिपदमुपात्तम्, कृत्रिमस्यैकवचनं सम्बुद्धिरित्यस्याप्यर्थं बोधयति।

न च विपरीतमेव किं न स्यादिति वाच्यम्; दूरादिति पदसन्निधानेन सम्बुद्धिसंज्ञाया अत्रान्वर्थत्वविज्ञानात्। नह्यामन्त्रितविभक्तेर्दूरत्वमदूरत्वं च संभवति। सम्बोधनस्य तु क्रियारूपत्वेन कारकापेक्षत्वाद् दूरादित्यस्यापादानत्वेन विशेषणत्वसम्भवः। दूरत्वञ्चात्र न देशकृतमाश्रीयते, अव्यवस्थितत्वात्। किन्तु सम्बोधनक्रियापेक्षं दूरत्वम्। यावति देशे प्राकृतप्रयत्नोच्चारितं सम्बोध्यमानेन न श्रूयते, किन्त्वधिकं प्रयत्नमपेक्षते, तत् सम्बुद्धौ दूरं भवति। ईदृशञ्च दूरत्वं सम्बोधन एव, न तु विभक्तौ। कथं तर्हि संबुद्धिसंज्ञकविभक्तावेकश्रुतिस्वरसिद्धिः? तत्रापि संबोधनसत्वादिति गृहाण। एवञ्चात्र सम्बुद्धिपदे आवृत्त्या, तन्त्रेण, शक्तिभेदेन वा कृत्रिमाकृत्रिमयोर्ग्रहणसम्भव इति।

अथ प्रसक्तानुप्रसक्तं विचारं परिसमाप्य पुनर्वाक्यविषयक एव विचारः प्रक्रान्तः प्रस्तूयते। तत्र वाक्यविषये पक्षद्वयं दृश्यते—क्वचित् प्रत्येकं वाक्यपरिसमाप्तिः, यथा भुज्यादिषु। क्वचित् समुदाये सा, यथा दर्शनादिक्रियासु। तत्र 'ब्राह्मणो भोज्यताम्' इति जात्यभिप्रायेण प्रयोगे, 'ब्राह्मणा भोज्यन्ताम्' इत्येकशेषेण, तन्त्रेण वा प्रयोगे 'देवदत्तयज्ञदत्तविष्णुमित्रा भोज्यन्ताम्' इति द्वन्द्वप्रयोगे प्रत्येकं वाक्यपरिसमाप्तिः, वस्तुस्वाभाव्यरूपसामर्थ्यात्। तदुक्तं हरिणा—

सङ्घैकशेषद्वन्द्वेषु　　केचित् सामर्थ्यलक्षणम् ।
प्रत्याश्रयमवस्थानं　　क्रियाणां　　प्रतिजानते ॥ इति ।
( वा० प० २।३७१ )

ननु नास्यक्रियावद् भुजिक्रियाऽपि पादप्रक्षालनासनोपवेशनान्नादानान्ननिगरणरूपव्यापारकलापरूपेति नानाकर्तृनिर्वर्त्यत्वात् कर्तृसमुदाय एव परिसमाप्यत इति चेन्न; भुजिक्रियायास्तृप्तिरूपेण फलेन तृप्तिसमानाधिकरणाभ्यां चान्नादानान्ननिगरणाभ्यां रूपाभ्यां निर्वर्त्यत्वात् । एवमस्वीकारे भुज्यर्थानिष्पत्तेः । तथाहि—यदि भुजिक्रिया पादप्रक्षालनाद्यन्ननिगरणान्तव्यापारकलापरूपा स्यात्, तदा पादप्रक्षालनादिकर्तृष्वपि 'चैत्रो भुङ्क्ते' इति प्रयोगः स्यात् । यथाऽधःश्रयणकालेऽपि पचतीति प्रयोगः । तस्मादन्नादानान्ननिगरणरूपैव भुजिक्रिया, न तु प्रागुक्तपादप्रक्षालनादिरूपेति न नास्यक्रियावद् भुजिक्रियायाः कर्तृसमुदाये परिसमाप्तिरिति । 'देवदत्तयज्ञदत्तविष्णुमित्रा दृश्यन्ताम्' इत्यत्र दर्शनक्रिया त्वधिगमफला समुदाये परिसमाप्यत इति वस्तुस्वाभाव्यात् तत्र समुदाये वाक्यपरिसमाप्तिरिति पक्षः । शास्त्रे लिङ्गात् 'मालादीनां च' (६।२।८८) इति सूत्रारम्भरूपात् प्रत्येकमादैचां वृद्धिसंज्ञा दृश्यते । तथा समुदाय एव समासाभ्यस्तसंज्ञयोर्विधेयत्वात् समुदाये परिसमाप्तिः ।

क्वचित् त्वेकत्रैवोभयथाऽपि वाक्यपरिसमाप्तिर्लोके शास्त्रे च दृश्यते । तत्र लोके यथा 'वृषलैर्न प्रवेष्टव्यम्' इति । अत्र प्रत्येकं समुदायस्य च प्रवेशो निषिध्यते । शास्त्रे च "अट्कुप्वाङ्नुम्व्यवायेऽपि" ( ८।४।२ ) इत्यनेन व्यस्तैर्यथासंभवं मिलितैश्च व्यवाये णत्वं भवति । एवं वाक्यार्थाश्रयणेन प्रत्येकं वाक्यपरिसमाप्तिः ।

समुदाये च वाक्यपरिसमाप्तिरिति दर्शितम् । इदानीं वाक्यसमाश्रयणेन तद्द्वयं प्रतिपाद्यते । तथाहि—अङ्गवाक्यानि प्रत्येकपर्याप्तान्येव, अङ्गिवाक्यं तु समुदायपर्याप्तञ्च प्रत्येकपर्याप्तञ्च । तथाहि—वेदे 'समिधो यजति' इत्यादीनि प्रयाजानुयाजवाक्यानि प्रत्येकं परिसमाप्तान्येव, तान्येव "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इत्याद्यङ्गिवाक्येन सहैकवाक्यत्वमापन्नानि महावाक्यरूपाण्यङ्गाङ्गिकर्मसमुदाये परिसमाप्तानि । तदेव महावाक्यमपोद्धृत्य योजितं प्रत्येकपरिसमाप्तमपि भवति । लोके यथा—

अभ्युद्धृता वसुमती दलितं रिपूरः
　　प्रत्याहृता बलवता बलिराजलक्ष्मीः ।
एकत्र जन्मनि कृतं तदनेन यूना
　　जन्मत्रये यदकरोत् पुरुषः पुराणः ॥ इति ।

अत्र हि पूर्वार्धे त्रीणि वाक्यानि प्रत्येकं परिसमाप्तानि, उत्तरार्धे तु तृतीयपादे तच्छब्देन परामृष्टं वाक्यत्रयात्मकमेकं महावाक्यं समुदाये परिसमाप्तम्। एकत्र जन्मन्यनेन यूनेति कर्त्रैक्य-निर्देशात् चतुर्थपादे तु तदेव यच्छब्देन परामृष्टं प्रत्येकं परिसमाप्तम्। 'जन्मत्रय' इत्यनेन कर्तृभेदनिर्देशादिति। समुदाये वाक्यपरिसमाप्तिरिति पक्षे च समुदायार्थेन यथा सङ्घोऽर्थवान् तथाऽवयवा अपि। तदुक्तं हरिणा--

प्रत्येकं तु समाप्तोऽर्थः सह भूतेषु वर्तते। इति।

अथेदानीमिदं विचार्यते—शब्दस्यार्थाभिधाने व्यापारः शब्दार्थयोः सम्बन्धरूपोऽभि-धाख्यः। सा चाभिधा प्रतिभातो भिन्नाऽभिन्ना वेत्यस्ति पक्षद्वयम्। प्रतिभा चोक्तिविनियोग-पदाभ्यामभिधेया वाग्धर्मः; अनुसन्धानाभिसन्धानपदाभिधेया तु मनोधर्मः तदुक्तं हरिणा—

उक्तिः करणविन्यासो न विना शब्दभावनाम्। इति।

अत्रोक्तिर्विनियोगः। करणविन्यासः प्रणिधानम्. शब्दभावना। अनुसन्धानमभि-सन्धानञ्चेत्येष दिङ्निर्देशः शब्दव्यापारस्य। विस्तरस्तु वाक्यपदीयविवृतेरम्बाकर्त्र्या अवसेय इति। तदेवमेतावता प्रबन्धेन वाक्यवाक्यार्थयोरखण्डत्वं सत्यत्वं नित्यत्वञ्च व्यवस्थापितम्। तद्वैपरीत्यं तु पदपदार्थयोरपोद्धारकल्पितयोरित्यत्र बहुवक्तव्यमपि गौरवादुद्वेजकमिति सारमेव निवेद्य विरम्यते।

वाक्यवाक्यार्थरूपाभ्यां स्वं द्विधा व्यस्य संस्थिता।
विवर्तमाना चिद्रूपा जननी संप्रसीदतु॥

# अथ व्याकरणदर्शने पदविमर्शः

अपदा पदरूपेण विग्रहे भाति या परा।
जगतः प्रकृतिः सा मे जगन्मूलं प्रसीदतु॥

अखण्डः स्फोट एव वाक्यम्, अखण्डा प्रतिभैव च वाक्यार्थः, तयोश्च तादात्म्याध्यासमूलकः सम्बन्धोऽपि वाच्यवाचकभावाख्योऽखण्ड एव। एतच्च त्रितयमपि कूटस्थनित्यं प्रवाहनित्यं वेति स्थितेऽपि लोके शास्त्रे च स्वस्वव्यवहारायापोद्धारकल्पनया वाक्यवाक्यार्थाभ्यां पदपदार्थौ विभज्यैते। इदञ्च पदपदार्थदर्शनं हरिणा वाक्यपदीयस्य तृतीये पदकाण्डे द्वासप्तत्यधिकद्वादशशत्या पद्यानां प्रायेण सुनिरूपितम्। तत्र च चतुर्दशसमुद्देशनाम्ना प्रकरणानि हब्धानि। तानि यथा—

| | |
|---|---|
| १. जातिसमुद्देशः, | २. द्रव्यसमुद्देशः, |
| ३. सम्बन्धसमुद्देशः, | ४. भूयो द्रव्यसमुद्देशः, |
| ५. गुणसमुद्देशः, | ६. दिक्समुद्देशः, |
| ७. साधनसमुद्देशः | ८. क्रियासमुद्देशः, |
| ९. कालसमुद्देशः | १०. पुरुषसमुद्देशः, |
| ११. संख्यासमुद्देशः, | १२. उपग्रहसमुद्देशः, |
| १३. लिङ्गसमुद्देशः, | १४. वृत्तिसमुद्देश इति। |

तत्र वाक्यादपोद्धृतं पदं द्विधा भिन्नमिति केचित्। नामाख्यातभेदात्। एवञ्च वाक्यार्थादपोद्धृतौ पदार्थावपि द्विविधौ। सिद्धसाध्यभेदात्। केचित्तु नामाख्यातोपसर्गनिपातभेदाच्चतुर्धा भिन्नं पदमिति वदन्ति। केचित्तु कर्मप्रवचनीयमपि पञ्चमं पदमिच्छन्ति। तत्र वैयाकरणानां पदलक्षणम्—सुप्तिङन्तं पदमिति। अत एव कोशेऽपि परिदृश्यते—सुप्तिङन्तचयो वाक्यमिति। यतः पदसमूहो वाक्यमिति सर्वेषामेव सम्मतम्।

सर्वे सर्वपदादेशा दाक्षीपुत्रस्य पाणिनेः।
एकदेशविकारे हि नित्यत्वं नोपपद्यते॥

इति भाष्यकारिकायां तु सर्वपदादेशा इत्यस्य सर्वस्य पदस्यार्थवत आदेशा इत्यर्थदर्शनेनार्थवत्पदमिति लभ्यते। एतच्च लक्षणं सुप्तिङादिप्रकृतावप्यस्तीति नेदं व्याकरणसूत्रेषु समाद्रियते—'पदस्य' (८।१।१६), पदात्' (८।१।१७), 'तिङ्ङतिङः' (८।१।२८) इत्यादौ।

नैयायिकाश्च शक्तं पदमिति वदन्त एतदेव लक्षणं समाश्रयन्ति। अस्मिंश्च लक्षणे स्वीक्रियमाणे प्रकृतिप्रत्ययप्रकृत्येकदेशवृत्त्येकदेशानामपि पदत्वम्, वृत्तीनाञ्च पञ्चविधानां पदसमूहत्वेन वाक्यत्वमप्रामाणिकमापतति। नापि च व्याकरणशास्त्रप्रक्रियानिर्वाह एतस्माल्लक्षणाद् भवतीत्यतः शक्तं पदमिति लक्षणं प्रोज्झितं वैयाकरणैः।

वाक्यार्थाच्च पदार्थानामपोद्धारे क्रियमाणे जातिः पदार्थ इति वाजप्यायनः। सर्वेषां पदानां द्रव्यमर्थ इति व्याडिः। इदं तदिति सर्वनामप्रत्यवमर्शयोग्यमत्र द्रव्यम्। अत एव शुक्लादीनामपि द्रव्यपदार्थता सिद्धा। तत्तदुपाधिव्यवच्छिन्नं ( घटाद्युपहितं ) वा ब्रह्मद्रव्यशब्दवाच्यं सर्वशब्दानां विषयः। व्यक्तिपर्यायो वा द्रव्यशब्दः। उभयस्यापि वाशब्दात् प्रतीतेरुभयं पदार्थः।

तत्र जातिः पदार्थ इति मीमांसका आकृत्यधिकरणे। तत्र शक्तिकल्पने लाघवमानन्त्यव्यभिचारादिदोषपरिहारश्चोक्तम्। व्यक्तिलक्षणं स्वलक्षणपदवाच्यं द्रव्यं पदार्थ इति शाक्याः। विशिष्टं पदार्थ इति नैयायिकाः। विवदत्स्वेव निक्षिप्य विरोधोद्भवकारणम्। तैः संरक्षितसद्बुद्धिः सुखं निर्वाति शब्दविदिति शङ्करभगवतः सूक्तिं किञ्चत् परिवर्त्य पठन्तो वैयाकरणास्तु जातिर्व्यक्तिश्चेत्युभयं पदार्थ इति वदन्ति। सर्वं दर्शनपार्षदं हीदं शास्त्रमिति भाष्यादिषु प्रसिद्धेः। अत एव 'जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्' (१।२।५८) इत्यत्र जातिपक्ष एव, 'सरूपाणामेकशेष एकविभक्तौ' १।२।६४ ) इत्यत्र च व्यक्तिपक्ष एव समाहृतः सूत्रकारेणेति। तदेवं दर्शनभेदेन जातिर्द्रव्यं वा पदार्थ इति स्थिते जातिपदार्थविषयकशास्त्रोपयोगी विचारो जातिसमुद्देशे।

ननु जातेः पदार्थत्वे कथं तस्याः क्रियायामन्वयः, असाधनत्वात्, अत एव च कथं तस्याः प्रतिनिधिरिति चेन्न; जातेः शक्तिप्रतिपादिनोपायत्वात्। कारकशक्तेश्च क्रियासाधनत्वात् क्रियान्वय उपपन्नः। अत्र दर्शने न द्रव्यगुणयोः श्रौतः क्रियाऽभिसम्बन्धः, अपि तु जातिक्रिययोः शक्तिक्रिययोर्वा विभक्तिप्रापितः सम्बन्धः। निराधारयोश्च जातिशक्त्योरसंभवात् सामर्थ्यात् सन्निधापितं स्वाधारं द्रव्यम्, तेनाऽपि स्वाधेयो गुण इति द्वयोरपि द्रव्यगुणयोः सामर्थ्यागतत्वम्। यद्यपि द्रव्यव्यवधानाद् द्वावपि जातिगुणौ क्रियाङ्गभावमनुभवत इति तुल्यत्वम्, तथापि यागादौ छागादीनां जातयो न प्रतिनिधीयन्ते, किन्तु गुणा एव प्रतिनिधीयन्ते। जातेर्द्रव्यात्मभूतत्वात्, नित्यं सन्निधानाच्च तस्यास्त्यागायोगात्। गुणानां तु व्यभिचारिणां सम्भवति प्रतिनिधिकल्पना। अतश्छागालाभे मेषो न प्रतिनिधीयते। श्वेताभावे तु कृष्णोऽपि छाग आलभ्यते।

शब्दस्य च द्वे जाती अभिधेये। शब्दगता, अर्थगता च। तत्र शब्दगता जातिः पूर्वमभिधयते। अर्थगता तु ततः पश्चात्। अर्थगतजातिषु च शब्दगतजातीनामध्यारोपः, शब्दरूपानुविद्धस्यैवार्थस्य सर्वत्र भानात्। तदुक्तम्—

न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ॥ इति ।
(वा. प. १।१२३)

शब्दजातय इमाः—अर्थजातय इति लोकव्यवहारदर्शनेन शब्दजातिष्वन्या जातिः, अर्थजातिष्वप्यन्या जातिरस्तीति गम्यते । संज्ञाशब्दानामपि डित्थडवित्थादीनां जातिवाचित्वमेव । बाल्यकौमाराद्यवस्थाभेदेन व्यक्तिभेदात् । सर्वासाञ्च जातीनां साधारणधर्मा इमे, तद्यथा—स्वाश्रयानुवृत्तिः सर्वजातीनां साधारणो धर्मः । स्वानुरूपप्रत्ययजनकत्वमपि तथा—यद् बलाद् द्रव्यं तद्रूपमाभाति । स्वानुरूपाभिधानहेतुत्वमपि तथा—यद्वशाद् द्रव्यं तद्रूपाभिधानवाच्यं भवति । प्रत्यवयवं प्रत्याश्रयञ्च सर्वात्मना परिसमाप्तिरपि तथा—यदि भागशो जातिर्वर्तेत, तदा भागश एव गोत्वादिप्रत्ययः स्यात् । सम्पूर्णश्च विषाणाद्यवयवदर्शनेऽपि झटिति गोत्वाकारः प्रत्ययः प्रसूयते । यथा च गोत्वादिजातिः सर्वा व्यक्तीर्व्याप्नोति, तथैते धर्माः सर्वजातीर्व्याप्नुवन्तीति जात्या तुल्यरूपत्वाद् जातिकार्याय कल्पन्ते । एवं सर्व एव विशेषाः ( घटादयः ) परस्परं व्यावर्तन्ते । अन्यथाऽनुगमात् सामान्यानि स्युर्न विशेषा इति सर्वविशेषेषु साधारणी व्यावृत्तिः सामान्यसमो धर्मस्तेषु जातिरित्युच्यते । कालाकाशदिशां प्रत्येकमेकत्वे नित्यत्वेनावस्थाभेदाभावे च सत्यपि घटादिरूपोपाधिसंयोगादनेकत्वमाश्रित्य तेष्वपि व्यवहाराय जातिः कल्प्यते । विज्ञानवादिनां त्वनुगताकारप्रत्ययरूपैव जातिः । सा च नित्या व्यक्तीनां प्रभवात् प्राक् प्रत्ययादुत्तरञ्च कारणेषु सन्निधानात् । अभिव्यक्तिस्तु तस्याः कार्येष्वेव । विधौ वा प्रतिषेधे वा ब्राह्मणत्वादिरूपा जातिरेव स्वाश्रयव्यक्तिं द्वारीकृत्य साधनम् । संख्यागता जातिश्च परम्परया द्रव्यगताया जातेर्विशेषिका । जातिर्व्यक्तिश्चोभयं पदार्थ इति वादेऽपि 'जातिः सत्या, व्यक्तयस्त्वसत्याः' इत्यागमानुसारिणः । तदुक्तं हरिणा—

सत्यासत्यौ तु यौ भागौ प्रतिभावं व्यवस्थितौ ।
सत्यं यत् तत्र सा जातिरसत्या व्यक्तयः स्मृताः '। इति ।
(वा. प. ३ । जा० स० ३२)

जातिश्च महासत्तारूपोपनिषत्सु ब्रह्मपदाभिधेया यद्यप्येकैव, तथापि घटादिर्व्यक्तिरूपा सत्योपाध्यवच्छिन्ना घटत्वादिरूपा बहवो लोके व्यवहारार्थं कल्प्यन्त इत्यद्वैतमतानुसारिव्याकरणदर्शनम् । सैव च सर्वशब्दतदेकदेशाभ्यामभिधेया त्वतलादयोऽपि तामेवाहुः । तदुक्तं हरिणा—

तां प्रातिपदिकार्थञ्च धात्वर्थञ्च प्रचक्षते ।
सा नित्या सा महानात्मा तामाहुस्त्वतलादयः ।। इति ।

( वा. प. ३ । जा० स० ३४ )

व्याख्यातञ्च हेलाराजेन—"सर्वभावेषु सद्रूपं सामान्यमनुगतम्, अभावस्यापि बुद्ध्या-कारेण निरूपणात् । महासत्तयाऽनयाऽवियोगात् प्रातिपदिकमात्रवाच्या सत्ता । तदुक्तम्—प्रातिपदिकार्थः सत्ता इति । धातुभिरपि साधनाधीनलब्धजन्मसु क्रियाव्यक्तिषु समवेता यथोपाध्युपगृहीतनानात्वा सत्तैवाभिधेयत्वमापद्यते । सिद्धसाध्यरूपार्थद्वयात्मना च तस्या एव वृत्तेस्तदपरराश्यभावात् सर्वशब्दविषयत्वं सत्तायाः । प्रत्ययभागेनाऽप्यत्र यथायथं संख्या-कारकाद्युपाधिविशिष्टा सत्तैवाभिधीयते । सा चोदयव्ययरहितत्वाद् नित्या, 'सत्प्रत्ययस्य सर्वदाऽनुवृत्तेः" इति । भावानां जन्मनाशावपि सत्तात्मकावेव । तदुक्तं हरिणा—

तिरोभावाभ्युपगमे भावानां सैव नास्तिता ।
लब्धक्रमे तिरोभावे नश्यतीति प्रतीयते ।।
पूर्वस्मात् प्रच्युता धर्मादप्राप्ता चोत्तरं पदम् ।
तदन्तराले भेदानामाश्रयाज्जन्म कथ्यते ।। इति ।

(वा. प. ३ । जा० स० ३८,३६)

अत्र द्वितीये पद्ये भेदानामित्यस्यावस्थाविशेषाणामित्यर्थः । एकस्या अपि सत्ताया गोत्वाश्वत्वादिरूपैर्भेददर्शनहेतवः, आश्रयो व्यक्तिरूपः, स्वात्ममात्रा गोत्वाश्वत्वादिसामान्यविशेषाः, अर्थान्तरत्वेनावभासमाना वा देशकालेन्द्रियादयो वेति । इयं च जातिः क्वचित् संस्थानाभि-व्यङ्ग्या । यथा घटादिषु घटत्वादयः । क्वचित्त्वाश्रयमात्राभिव्यङ्ग्याः, यथा पृथिवीत्वाप्त्वादयः ।

केचिदाधारं विना जातेः सत्त्वं नेच्छन्ति । तेषां मते प्रलये कारणात्मनाऽवस्थितेष्वा-श्रयेषु जातिरवतिष्ठते । ये तु महाप्रलयमिच्छन्ति तेषां मतेऽपि तत्र सत्तारूपमहासामान्य-रूपतया जातीनामवस्थानम् । यद्यपि ब्राह्मणत्वादिजातयः सर्वपदार्थगताः, व्यापकत्वात्; तथापि क्वचित् क्वचिदभिव्यक्ता एव विधिनिषेधरूपाणां स्वकार्याणां साधिका न सर्वत्र । तेन ब्राह्मण-चित्रपूजायां तद्विघाते वा न धर्मस्याधर्मस्य वा प्राप्तिः । नरसिंहे गौरखरे चित्ररूपे वा नरसिंहत्वम्, गौरखरत्वम्, चित्रत्वं वा जातिरन्यैव । न तु नरत्वसिंहत्वादिरूपजातिद्वयरूपा । यतश्चान्विता-कारज्ञानजनकं व्यक्तीनां किञ्चन रूपं सामान्यमिति सर्वपार्षदो न्यायः । ततश्च सादृश्यं शक्ति-

रित्यपि नामान्तरेणोच्यताम् , न काचिदनुपपत्तिरिति। बौद्धानां त्वन्यापोहादतद्व्यावृत्तिरूपादन्या नास्ति काचन जातिर्भावरूपा। यथा ज्ञेयेषु घटत्वादिजातयः सन्ति, तथा ज्ञानेष्वपि प्रत्यक्षत्वानुभवत्वस्मृतित्वादिरूपा जातयः सन्त्येव।

तदेवं प्रमाणपरिशुद्धा जातिः शब्देनाभिधीयमाना दृष्टादृष्टविषयकव्यवहारसाधनसमर्थेति जातिपदार्थसिद्धिः।

द्रव्यसमुद्देशे च 'द्रव्यं पदार्थः' इति व्याडिमतं विस्तरेण निरूपितम्। तत्र द्रव्यलक्षणगुणसमुद्देशे उक्तं हरिणा—

वस्तूपलक्षणं यत्र सर्वनाम प्रयुज्यते।
द्रव्यमित्युच्यते सोऽर्थो भेद्यत्वेन विवक्षितः॥ इति।
(वा. प. ३। भूयोद्र० स० ३)

व्याख्यातं चेदं हेलाराजेन—'इह सर्वनाम्नां द्वयी गतिः। वस्तुमात्राभिधायिनः केचिद्, यथा सर्वादयः। अन्ये च विशिष्टवस्तुवाचकाः, यथाऽन्यतरादयः। तत्र पूर्वैर्द्रव्यं लक्ष्यते। तथाहि—इदं तदिति सर्वनामप्रत्यवमर्शयोग्यं द्रव्यम्। इदमिति प्रत्यक्षार्थवाचकम्। तदिति प्रमाणान्तरावगतपरोक्षार्थाभिधायकम्। तेन प्रत्यक्षपरोक्षार्थाकारपरामर्शेन वस्तुमात्रवाचित्वम् , इदं तदोरुपादानेन सर्वनाम्नामुक्तं भवति। तथा च प्रत्यक्षपरोक्षाकारभेदावधीरणेन वस्तुमात्रं तद्वाच्यं द्रव्यं लक्षितं भवति। प्रतिपिण्डं ह्यपरिमितः स्वभावो द्रव्याणामशक्यो लक्षयितुमिति सर्वद्रव्यसाधारणलक्षणमुच्यते। वस्तुरूपतायाः सर्वत्र भावात्। एतदेव निरुक्तकारेणाप्युक्तम् 'अद इति यत् प्रतीयते, तद् द्रव्यम्' इति। द्वितीयमपि विशेषलक्षणमाह—भेद्यत्वेन विवक्षित इति। सामान्यादिभिरुपाधिभिरवच्छेद्यत्वेन विशेष्यत्वेन वक्तुमभिप्रेतमित्यर्थः। विवक्षितग्रहणेन न वस्त्वर्थस्येदं लक्षणम्, अपि तु शब्दार्थस्येत्याह। तथा च जात्यादिरपि चेद् विशेष्यत्वेन विवक्षितस्तदा द्रव्यमिति तीर्थान्तरीयलक्षणानादराद् व्याडिदर्शनेन सार्वत्रिकी द्रव्यपदार्थव्यवस्था सिध्यति। द्रव्यपर्यायशब्दाश्चोक्ता हरिणा द्रव्यसमुद्देशारम्भ एवम्—

आत्मा वस्तु स्वभावश्च शरीरं तत्त्वमित्यपि।
द्रव्यमित्यस्य पर्यायास्तच्च नित्यमिति स्मृतम्॥ इति।
(वा. प. ३। द्र० स० १)

इदं चैवं व्याख्यातं हेलाराजेन—"इहार्थक्रियायां द्रव्यमेवोपयुज्यत इति तदेव प्रवर्तकमर्थिनाम्। अतः शब्देन तदेवोच्यते। अनभिधीयमाना तु जातिरवच्छेदिका, गुडशब्दे माधुर्यादय इवेति द्रव्यवादिनां दर्शनम्।

द्रव्यं च द्विविधम्—पारमार्थिकं सांव्यवहारिकञ्च। तत्र द्वितीयं भेद्यभेदकप्रस्तावेन गुणसमुद्देशे वक्ष्यते – वस्तूपलक्षणं यत्रेत्यादिना। अनेन च द्रव्येण व्याडिदर्शने सर्वे शब्दा द्रव्याभिधायिनो भवन्ति।

इह तु पारमार्थिकं द्रव्यं निरूप्यते। तथाहि—आत्मा अद्वैतवादिभिरात्मशब्देन तद् द्रव्यमुक्तम्। आत्मैव ह्युपाधिभिन्नं प्रतिभासमानं द्रव्यं पदानामर्थ इति तेषां दर्शनमिहैव वक्ष्यमाणम्। वस्तुस्वलक्षणमर्थक्रियाकारि द्रव्यमिति शाक्यैरुक्तम्। स्वभाव इति सत्ताऽद्वैतवादिभिः, स्वभाव आत्मभूता सत्तेति कृत्वा। तथाहि—क्रमरूपोपसंहारे सत्तैव सत्त्वमिति स्वसम्बन्धिभिरुपाधिभिरुपहितभेदा सैव द्रव्यम्। प्रकृतेरेकदेशश्चेतनः, पुरुषस्तद्द्वारेण शरीरशरीरिणोरव्यतिरेकात्—शरीरं द्रव्यं प्रधानमेवेति प्राकृतिकैः शरीरमेवैक आत्मा येषाम्, तैः शरीरात्मभिरुच्यते। तत्त्वम्, इति चतुर्भूततत्त्ववादिभिश्चार्वाकैर्द्रव्यमुच्यते। पृथिव्यप्तेजोवायुरिति तत्त्वानि, तत्समुदाये शरीरेन्द्रियविषयसंज्ञा इति वचनात्। तदेवमेतैः परमार्थत एकमेव वस्तूच्यते। द्रव्यमित्यस्येति। द्रव्यं नाम यः पदार्थस्तस्यैत एव पर्यायाः। एतेषामेव पारमार्थिकरूपाभिधायित्वात्। नान्ये घटादिशब्दाः।

सत्यपि तदभिधायित्वे वक्ष्यमाणनयेनात्मादिशब्दानामेव सर्वत्र घटादावव्याहतप्रसरत्वम्। तथा च भाष्यम्—एकोऽयमात्मा उदकं नामेति। अत्रात्मशब्द उदके प्रयुज्यमानो द्रव्यवचनः। आकृतिद्वारेण चान्ये शब्दा द्रव्ये वर्तन्ते। इमे तु तत्परित्यागेन मुख्यया वृत्त्येति विशेषः। सिद्धे शब्दार्थसंबन्धे ( म० भा० पस्पश० ) इत्यत्र द्रव्यं नित्यमाकृतिरन्या चान्या च भवतीति वदता भाष्यकारेण नित्यं द्रव्यं स्मृतम्।

यद्यपि शाक्यादिदर्शने नित्यं न भवति द्रव्यम् तथापि तन्मतस्यानभ्युपगमाददोषः। केवलं यदस्माकं द्रव्यम्, तदन्यैरेवमभिधीयत इत्येवमत्रोपन्यासः। यद्वा भाष्यानुसारेण स्वरूपान्यथात्वानापत्तिः। विकारभेदेऽपि नित्यत्वं विवक्षितमेवेति सर्वत्र तत्सिद्धिः" इति। असत्यघटादिरूपोपाधिपरिष्वक्तं सत्यं ब्रह्मैव घटादिशब्दार्थः। असत्यवर्णोपाधिव्यावृत्तैरखण्डस्फोटरूपैर्घटादिशब्दैरभिधीयत इति तु वैयाकरणानां सिद्धान्तः। तदुक्तं हरिणा—

सत्यं वस्तु तदाकारैरसत्यैरवधार्यते।
असत्योपाधिभिः शब्दैः सत्यमेवाभिधीयते॥ इति।
( वा० प० ३। द्र० स० २ )

तृतीये च सम्बन्धसमुद्देशे आरम्भ एव शब्दार्थयोः सम्बन्धं साधयता हरिणोक्तम्—

ज्ञानं प्रयोक्तुरर्थश्च स्वरूपञ्च प्रतीयते।
शब्दैरुच्चरितैस्तेषां सम्बन्धः समवस्थितः॥ इति।
( वा० प० ३।स० स० १ )

अत्र शब्दप्रयोक्तुर्ज्ञानमभिप्रायविशेष इति पुण्यराजः। वस्तुतस्त्वभिप्रायो न ज्ञानम्, किन्तु विवक्षारूपं तात्पर्यम्। अतो ज्ञानपदेन प्रयोक्तृसमवेतं प्रयोज्यपदार्थविषयकं शब्दप्रयोगे कारणीभूतं ज्ञानमेव ग्राह्यम्। तत्र ज्ञानेन सह शब्दस्य कार्यकारणभावरूपः सम्बन्धः। अर्थ-स्वरूपाभ्यां सह तु वाच्यवाचकभावः सम्बन्धः। अस्यायं वाचकोऽस्यायं वाच्य इति लोक-व्यवहारादनुभवादपि शब्दार्थयोः सम्बन्धः समवस्थित इति गम्यते। नित्यपरतन्त्रत्वेन च स्वस्वभावेनोपलक्षितस्य सम्बन्धस्य षष्ठ्येव वाचिका, न तु सम्बन्धादिपदम्। तस्य स्वप्राधान्ये-नैव सम्बन्धाभिधायकत्वात्। उपकार्योपकारकयोर्द्वयोरुपकारादपि तयोर्धर्मः सम्बन्धरूपोऽनु-मीयते, असम्बद्धानामुपकाराभावात्। असौ सम्बन्धः शक्तीनामपि शक्तिर्नियतकार्यजनने नियामकः। गुणानामपि द्रव्याश्रितत्वनियामक इत्युक्तं हरिणा—

उपकारात् स यत्रास्ति धर्मस्तत्रानुगम्यते।
शक्तीनामप्यसौ शक्तिर्गुणानामप्यसौ गुणः॥ इति।

( वा० प० ३। स० स० ५ )

भूयोद्रव्यसमुद्देशे च चतुर्थे प्रकरणे गुणादिष्वपि वर्तमानं सार्वत्रिकं द्रव्यलक्षणमुक्तम्—

वस्तूपलक्षणं यत्र सर्वनाम प्रयुज्यते।
द्रव्यमित्युच्यते सोऽर्थो भेद्यत्वेन विवक्षितः॥ इति।

( वा० प० ३। भूयोद्र० स० ३ )

व्याख्यातमिदं प्रागिति नेह पुनर्व्याख्यायते। अस्मिंश्च द्रव्यलक्षणे रूपादीनामपि द्रव्यत्वाद् [१]'अद्रव्यप्रकर्षे'—इत्यामुप्रत्ययाभावः। समयातरं शीतम्, समीपतरमित्यर्थः। उपांशुतरः शब्दः, उच्चैस्तरो ध्वनिरिति।

पञ्चमे च गुणसमुद्देशे प्रकरणे शास्त्रप्रक्रियानिर्वाहाय पारिभाषिकं गुणस्वरूपमुक्तं हरिणा—

संसर्गि भेदकं यद् यत् सव्यापारं प्रतीयते।
गुणत्वं परतन्त्रत्वात् तस्य शास्त्र उदाहृतम्॥ इति।

( वा० प० ३। गु० स० १ )

अत्र 'संसर्गि' इत्यस्य स्वरूपसंमिश्रणं प्राप्याधारे वर्तमानम्, अतएव भेदकम्—आधारान्तरादवच्छेदकम्। यथा शुक्लोऽयं न नील इति। यद् यदिति वीप्सया सामान्यादे-रप्येवंभूतस्य गुणत्वं दर्शितम्। एवञ्च गौरयं नाश्व इत्याश्रयान्तराद् अवच्छेदे गोत्वमपि

१. किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे ( ५।४।११ ) इति पाणिनिसूत्रम्।

गुणो भवति। किञ्चानया वीप्सया नेदं वस्तुतः समवस्थितं लक्षणम्, किन्तु पारिभाषिकमित्यपि सूच्यते। किञ्च भेदकमित्यनेन भेद्यं द्रव्यम् भेदको गुण इति द्रव्याद् गुणस्य विशेषो दर्शितः। सव्यापारमित्यनेन चावच्छेदकत्वेन रूपेण प्रतीयमानमेव गुणपदव्यपदेश्यम्, न तु रूपान्तरेणेति बोध्यते। परतन्त्रत्वाद् गुणत्वमिति हेतुनिर्देशेन च लोकप्रतीतिसिद्धमिदं लक्षणम्, न तु परिभाषामात्रम्। लोके हि परतन्त्रो गुण इत्युच्यत इत्यपि सूचितं भवति। तथा च लौकिकस्यैवायं लक्षणस्य वैशेषिकप्रसिद्धयपाकरणायानुवादः। शास्त्र उदाहृतमित्यनेन च व्याकरणशास्त्रे साधुत्वान्वाख्यानाय लौकिक एवायं गुणो गृहीत इति दर्शितम्। तथाहि—समर्थवार्तिके—वीरपुरुष इत्यादौ द्रव्ययोरत्यन्तभेदाद् द्रव्यपदार्थपक्षे सामर्थ्याभावेन समासाभावे चोदितेऽयं हि गुणः पदार्थो भवति तदा सामर्थ्यम् अन्यो हि वीरत्वं गुणः, अन्यो हि पुरुषत्वमिति। अत्र जातेरपि द्रव्ये समवेतत्वात् पारतन्त्र्येण गुणत्वमुक्तमिति।

षष्ठे च दिक्समुद्देशे वैशेषिकसम्मतदिक्पदार्थापाकरणपूर्वकं स्वशास्त्रप्रक्रियोपयोगी दिक्पदार्थः प्रदर्शितः। तथाहि—वैशेषिकनये दिग् द्रव्यम्। वैयाकरणनां तु दिक् शक्तिरिति, तत्र दिक् शक्तिरित्येव न्याय्यम्। कार्यानुमेयत्वे सति पदार्थोपकारकत्वरूपस्य शक्तिलक्षणस्य तत्र सत्त्वात्। शक्तिरूपाया दिशो लक्षणं तूक्तं हरिणा—

व्यतिरेकस्य यो हेतुरवधिप्रतिपाद्ययोः।
ऋज्वित्येव यतोऽन्येन विना बुद्धिः प्रवर्तते॥
कर्मणो जातिभेदानामभिव्यक्तिर्यदाश्रया।
सा स्वैरुपाधिभिर्भिन्ना शक्तिर्दिगिति कथ्यते॥ इति।

( वा० प० ३। दि० स० २,३ )

तत्रेदमस्मात् पूर्वं पश्चाद् वेत्यत्रानुभूयमानो योऽवध्यवधिमतोर्भेदस्तस्य हेतुर्दिगित्येकं दिशोर्लक्षणम्। वियति पृथिव्यादिरूपं निमित्तं विना ऋजुरयं वंशः वक्रोऽयं वंश इति बुद्धेर्हेतुरिति द्वितीयं लक्षणम्। भ्रमणोत्क्षेपणादिकर्मसु भ्रमणत्वादिजातिभेदानामभिव्यक्तौ हेतुर्जातिरिति तृतीयं लक्षणम्। सा च दिक् शक्तिर्यद्यप्येकैव, तथाप्युपाधिभेदाद् दशधा प्रविभज्यते। तथा हि मेरुं प्रदक्षिणमावर्तमानस्य सवितुर्लोकपालपरिगृहीतप्रदेशसंयोगरूपोपाध्यपेक्षो दशधा विभागो वाल्मीकिरामायणादौ दर्शितोऽत्रावसेय इति। व्याकरणे दिक्पदार्थसाधनोपयोगश्च [१]दिक्शब्देभ्यो दिग्देशकालेष्वस्तातिः, इत्यादौ द्रष्टव्यः।

सप्तमे च साधनसमुद्देशे कर्तृकर्मादिशक्तिरूपाणां गुणानां द्रव्यपरतन्त्राणां द्रव्याश्रितानां साधनत्वं साधितम्, न तु द्रव्यस्य तदाश्रयस्य। तदुक्तं हरिणा—

१. दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः ( ५।३।२७ ) इति पाणिनिसूत्रम्।

स्वाश्रये समवेतानां तद्वदेवाश्रयान्तरे ।
क्रियाणामभिनिष्पत्तौ सामर्थ्यं साधनं विदुः ।। इति ।
( वा० प० ३। सा० स० १ )

क्रियानिर्वृत्तौ द्रव्यस्य शक्तिः साधनम्, साध्यतेऽनया क्रियेति व्युत्पत्तेर्भाष्यकारप्रभृतयो विदुः । द्रव्यं क्रियाभिनिर्वृत्तिं प्रति साधनभावमुपैतीति भाष्यं तु शक्तिद्वारा इति शेषपूरणेन व्याख्येयम् ।

क्रियासमुद्देशे चाष्टमे क्रियास्वरूपमुपवर्णितं हरिणा—

यावत् सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते ।
आश्रितक्रमरूपत्वात् सा क्रियेत्यभिधीयते ।।
गुणभूतैरवयवैः समूहः क्रमजन्मनाम् ।
बुद्धया प्रकल्पिताभेदः क्रियेति व्यपदिश्यते ।। इति ।
( वा० प० ३। क्रि० स० १,४ )

तत्र सिद्धम् अपाक्षीदित्यादौ; असिद्धम्, पचति पक्ष्यतीत्यादौ । द्वितीये च पद्ये क्रमजन्मनां समूहासम्भवाद् बुद्ध्या प्रकल्पिताभेद इत्युक्तम् । क्रिया नामेयमत्यन्तापरिदृष्टावयवा न शक्या पिण्डीभूता निदर्शयितुमिति भाष्यञ्चैवमुपपादितं हरिणा —

क्रमात् सम्भविनां तेषामात्मानो न समूहिनाम् ।
सद्वस्तुविषयैर्यान्ति सम्बन्धं चक्षुरादिभिः ।।
यथा गौरिति सङ्घातः सर्वो नेन्द्रियगोचरः ।
भागशस्तूपलब्धस्य बुद्धौ रूपं निरूप्यते ।।
इन्द्रियैरन्यथा प्राप्तौ भेदांशोपनिपातिभिः ।
अलातचक्रवद् रूपं क्रियाणां परिकल्प्यते ।। इति ।
( वा० प० ३। क्रि० स० ६–८ )

नवमे च कालसमुद्देशे भगवतः कालाख्या शक्तिर्निरूपिता हरिणा ।

काल एव हि विश्वात्मा व्यापार इति कथ्यते ।
( वा० प० ३। काल० १२ )

इयं चोक्तिः शक्तिशक्तिमतोरभेदोपचारात् । भगवतः कालरूपत्वञ्च गीतायामप्युक्तम्-- "कालोऽस्मि लोकक्षयकृत् प्रवृद्धः" इति ( गी० ११।३२ )।

१०

जगतो जन्मस्थितिसंहाररूपाश्च व्यापाराः कालस्य बीजवृक्षादिनिदर्शनैर्लोकेऽपि प्रसिद्धाः। वाक्यपदीये प्रथमकाण्डे च–

अभ्याहतकलां यस्य कालशक्तिमुपाश्रिताः।
जन्मादयो विकाराः षड् भावभेदस्य योनयः॥

( १।३ )

इति कण्ठत एव कालस्य शक्तिरूपत्वं दर्शितमिति।

दशमे च पुरुषसमुद्देशे प्रथममध्यमोत्तमपुरुषाणां प्रयोगनिमित्तानि दर्शितानि। तत्र प्रत्यक्तारूपं चैतन्यमुत्तमपुरुषप्रयोगे उपाधिः। चैतन्यञ्च परभावश्चेत्येतदुभयं मध्यमपुरुषोपाधिः। एतद्द्वयाभावश्च प्रथमपुरुषोपाधिः। तदेतदुक्तं त्रिभिर्हरिणा–

प्रत्यक्ता परभावश्चाप्युपाधी कर्तृकर्मणोः।
तयोः श्रुतिविशेषेण वाचकौ मध्यमोत्तमौ॥
सदसद्वाऽपि चैतन्यमेताभ्यामेव गम्यते।
चैतन्यभागे प्रथमः पुरुषो न तु वर्तते॥
बुधि-जानाति-चितिभिः प्रथमे पुरुषे सति।
संज्ञानार्थैर्न चैतन्यस्योपयोगः प्रकाश्यते॥ इति।

( वा० प० ३।पु० स० १-३ )

एकादशे च संख्यासमुद्देशे संख्याया लक्षणमुक्तं हरिणा—भेदाभेदविरहितेषु द्रव्येषु भेदाभेदविधायकत्वमिति। यतो हि द्रव्यस्य भूयोद्रव्यसमुद्देशे प्रोक्तस्य सर्वपदार्थस्य भेद्यत्वेन विवक्षित इति लक्षणलक्ष्यस्य स्वरूपतो भेदाभेदरहितस्य भेदविधायिनी द्वित्वादिका संख्या— अभेदविधायिनी चैकत्वसंख्या इति। तदुक्तं हरिणा —

अतो द्रव्याश्रितां संख्यामाहुः संसर्गवादिनः।
भेदाभेदव्यतीतेषु भेदाभेदविधायिनीम्॥ इति।

(वा० प० ३। सं० स० १२)

स च संख्यारूपो धर्मो द्रव्यरूपात् स्वाश्रयादतिरिक्तोऽनतिरिक्तो वेत्यत्रानास्था दर्शिता हरिणा, भेदाभेदयोरुभयोरपि सम्भवात्। तथा हि भेदो व्यवहारतः सम्भवति। अभेदस्तु वस्तुत इत्यद्वैतवादपादानुसरणात्। किञ्च संख्या न केवलं स्वाश्रयस्यैव भेदिका, किन्तु स्वस्वरूपस्यापि भेदिका। यतः संख्यास्वपि संख्या वर्तते। एकत्वसंख्या च द्वित्वादीनां योनिरित्यादिकं विस्तरेणात्र प्रतिपादितं तत एव द्रष्टव्यम्।

द्वादशे चोपग्रहसमुद्देशे —आत्मनेपदेन परस्मैपदेन च प्रतीयमानोऽर्थविशेष उपग्रहत्वेन वर्णितः। धात्वर्थः, तद्विशेषणमपि च तत्त्वेन निरूपितावत्रैव। तदुक्तम्—

य आत्मनेपदाद् भेदः क्वचिदर्थस्य गम्यते।
अन्यतश्चापि लादेशाद् मन्यन्ते तमुपग्रहम्॥
धात्वर्थस्तद्विशेषश्चाप्युक्तः क्वचिदुपग्रहः।
धात्वर्थो गन्धनादिः स्याद् व्यतिहारो विशेषणम्॥ इति।

(वा० प० ३। उ० स० १, ४)

अत एवाहुः—उपग्रहः परस्मैपदात्मनेपदे इति। अत्र लादेशयोः परस्मैपदात्मनेपदयोः प्रयोगे उपाधिभूता अर्था एवोपग्रहपदेन विवक्षिता भान्ति। उपगृह्यते परस्मैपदात्मनेपदयोः सन्निधाने प्रतीयते योऽर्थः, स उपग्रह इति व्युत्पत्तिः। करणेऽपा च लादेशयोस्तत्प्रयोग इति।

त्रयोदशे च लिङ्गसमुद्देशे लिङ्गानां सप्तविकल्पा दर्शिताः। (१) स्तनकेशादिसम्बन्धो लिङ्गम्। तच्च क्वचिदारोपितम्, खट्वादिषु; क्वचिच्चानारोपितम्, स्त्र्यादिषु। (२) तत्तज्जाति-समानाधिकरणा आरोपिता अनारोपिता वा स्तनादयो लिङ्गम्। (३) आरोपितानारोपित-साधारणैः स्तनादिभिरभिव्यक्ताः स्त्रीत्वादिजातयो वा लिङ्गम्। (४) सत्त्वादिगुणानामुपचया-पचयसाम्यावस्था एव लिङ्गम्। (५) उपचितापचितसमा गुणा एव वा लिङ्गम्। (६) तत्तच्छब्दै-रुपजनितोऽर्थविशेष एव वा लिङ्गम्। (७) शब्दसंस्कारो वा लिङ्गमिति। एतेषां विस्तरोऽत्रान्यत्र च निरूपितः, अतोऽत्र दिङ्मात्रनिर्देशः कृत इति।

चतुर्दशे च वृत्तिसमुद्देशे परार्थाभिधानेन तत्तदर्थेषु प्रवृत्तिरूपा वृत्तयः पञ्च, कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपाः प्रत्येकं विस्तरेण निरूपिताः। तदेवमत्र चतुर्दशसु समुद्देशेषु पदानि, पदैकदेशाः, पदार्थाः, पदार्थैकदेशाः व्याकरणशास्त्रोपयोगिनो विस्तरेण निरूपिताः। अत्र च मदीयोऽयं प्रयासो वाक्यपदीये गाम्भीर्याद् भाषायाः काठिन्यादतिप्राचीनत्वाच्च निगूढानामर्थानामुपपादनं विशदीकरणञ्चेति मन्ये न वैफल्यं लभते लप्स्यते वेति।

पदे पदे मे स्खलितं जरसा विप्लुतस्य यत्।
तरसा तत् समाधातुं सज्जीभवत सज्जनाः॥ इति।



# श्रीसुरेश्वराचार्या आभासवादश्च

डॉ० गौरीनाथशास्त्री
उपकुलपतिः
वाराणसेयसंस्कृतविश्वविद्यालयः, वाराणसी

वेदान्तेषु तत्र तत्र जीवस्वरूपनिरूपणप्रस्तावे जीवोऽन्तःकरणाद्यवच्छिन्नं चैतन्यमिति, ब्रह्मणः प्रतिबिम्बो जीव इति, ब्रह्मण आभासो जीव इति च त्रयो वादाः शास्त्रकारैरुल्लिख्यन्ते। तत्र सर्वेऽपीमे वादाः श्रुतिस्मृतिमूलका भाष्यमूलकाश्च। तथा हि श्रुतौ—

यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनः सर्वे लोकाः, सर्वे प्राणाः, सर्वाणि भूतानि व्युच्चरन्ति—( बृ० २–१ )।

यथा सुदीप्तात् पावकाद्विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः।
तथाक्षराद् विविधाः सौम्यभावाः प्रजायन्ते तत्र चैवापियन्ति॥
( मु० २–१ )।

विस्फुलिङ्गो यथाऽल्पकाष्ठावच्छिन्नोऽग्निः, तथा जीवोऽल्पान्तःकरणावच्छिन्न इति प्रतीयते।

स्मृतावपि—

"ममैवांशो जीवलोके जीवभूतः सनातनः" इत्यादिभगवद्गीतासु। (भ० गी० १५।७)।

प्रतिबिम्बवादश्च—

यथा ह्ययं ज्योतिरात्मा विवस्वान् अपो भिन्ना बहुधैकोऽनुगच्छन्।
उपाधिना क्रियते भेदरूपः देवः क्षेत्रेष्वेवमजोऽयमात्मा॥
एक एव हि भूतात्मा भूते भूते व्यवस्थितः।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत्॥ इति।
( ब्र० बि०–१२ )

स्मृतिश्च—

"यद्यज्जनो भगवते विदधीत मानं
तच्चात्मने प्रतिमुखस्य यथामुखश्रीः।"

इति भागवतवाक्यम्।

अत्र दृष्टान्तमुखेन प्रतिबिम्बवादः प्रतीयते। यद्यप्याभासवादः प्रायः प्रतिबिम्ब एवाभासपदप्रयोगात् प्रतिबिम्बवाद एव, नातिरिक्त इति वक्तुं शक्यते। बिम्ब एव हि प्रतिबिम्बो नातिरिक्तः, दर्पणप्रतिहतैर्नयनरश्मिभिः परावृत्य बिम्बस्यैव ग्रहणात् कथं बिम्बे चक्षुस्संयोग इति शङ्कानवकाशः; तथाप्याभासवादे प्रतिबिम्बो बिम्बाद् भिन्नः प्रातीतिकः, शुक्तौ रजतमिव दर्पणेऽध्यस्तः। तस्य चाधिष्ठानज्ञाने सत्यपि यावद्दर्पणसान्निध्यं सत्त्वम्, दर्पणापनयने नाश इत्यभ्युपगमः। अयं च सिद्धान्तलेशसंग्रहे द्वितीयपरिच्छेदे 'अद्वैतविद्याऽमृतस्तु' इत्यादिना सयुक्तिकं विस्तरेणोपपादितः। वेदे "जीवेशावाभासेन करोति माया चाविद्या च स्वयमेव भवति" इत्यादिष्वाभासपदप्रयोगः प्रतिबिम्बमिथ्यात्वतात्पर्य इत्येतेषां मतम्।

आचार्यभगवत्पादैस्तु 'पर एवात्मा देहेन्द्रियमनोबुध्युपाधिभिः परिच्छिद्यमानो बालैः शारीर इत्युपचर्यते" ( ब्र० सू० भा० १–२–३ ) इत्यादाववच्छेदवादः, ' आभास एव जीवः परस्यात्मनो जलसूर्यकादिवत् प्रतिपत्तव्यः" ( ब्र० सू० भा० २–३–४० ) इत्यादौ प्रतिबिम्बवादः, तत्रैवाभासपदप्रयोगादाभासवादश्च व्यवह्रियते; परं तूपदेशसाहस्र्यामाचार्यैराभासवादः स्पष्टतयैव व्यवहृतः—"आभासासत्त्वमेव च" ( २-१८-४३ ), "आभासस्याप्यवस्तुतः" ( २-१८-४४ ) इत्यादौ।

अयमाभासवादः श्रीविद्यारण्यश्रीचरणैः कूटस्थदीपे "कूटस्थो ब्रह्मजीवेशौ इत्येवं चिच्चतुर्विधा" इत्यारभ्य सम्यगुपपादितः। तत्रैव चाभासस्यावस्तुत्वे तत्त्वमसि" इत्यादिवाक्यात् "जीवेश्वरयोरैक्यप्रतिपत्तिः कथं युज्यते ?" इत्याशङ्क्य 'नेदमभेदे सामानाधिकरण्यम्, अपि तु बाधायाम्; यत् त्वम् इत्यभिमतं तत् तथा न, अपि तु ब्रह्मैव, यः स्थाणुः स पुमानितिवदित्यर्थः" इति समाहितम्। तत्त्वमसीत्यादौ बाधायां सामानाधिकरण्यं भगवत्पादैरपि "व्याप्तेश्च समञ्जसम्" इति तृतीयाध्यायसूत्रेऽङ्गीकृतमेव।

कूटस्थदीपे चाभासवादे काचन शङ्कोत्थापिता। सा चेत्थम्—"ननु परागर्थप्रमेयेषु या फलत्वेन संमता संवित् सैवेह मेयोऽर्थः वेदान्तोक्तिप्रमाणतः" इति वार्त्तिकविरुद्धोऽयमाभासवादः। अस्मिन् हि वार्त्तिके फलत्वेन संमता संवित् चिदाभास एव न तु शुद्धं चैतन्यम्, तस्य प्रागपि सत्त्वेन फलत्वासंभवात्। सैव च वेदान्तोक्तिप्रमाणतः प्रमेया प्रतीयते। तथा च आभासस्य शुद्धब्रह्मणाऽभेदः खल्वत्र प्रतिपाद्यते। एवं च भवदुक्तोऽयमाभासवादो वार्त्तिकविरुद्ध इत्याशङ्क्य श्रीविद्यारण्यैः—

इति वार्त्तिककारेण चित्साद्दश्यं विवक्षितम् ।

ब्रह्मचित्फलयोर्भेदः साद्दश्यां विश्रुतो यतः ॥

इति श्लोकेन वार्त्तिककारैः कृतः 'सैव मेयोऽर्थः' इति प्रयोगः साद्दश्याद् गौण इति समाहितम् ।

एवं सति आभासवादो वार्त्तिककारोपज्ञ इति केषाञ्चित् कथनं कथं वा संगच्छत इति न जानीमः । वार्त्तिककारा हि बृहदारण्यकवार्त्तिके "स एव इह प्रविष्टः" इति श्रुतिवाक्यव्याख्यानावसरे आत्मनः बुद्ध्यादौ प्रवेशः "प्रवेशो मुखबिम्बवत्" इति वदन्त आदर्शे मुखप्रवेशवत् प्रतिबिम्बतयेति समादधुः । प्रतिबिम्बस्य मुखाभिन्नतया तस्य ग्रहणे चक्षुःसंयोगः कथमुपपादनीय इति शङ्कायाम्—

दर्पणाभिहता दृष्टिः पर्यावृत्य स्वमाननम् ।

व्याप्नुवन्त्यविभागेन भ्रान्तिं नो जनयेद् यथा ॥

( १-४-६१८ )

इति प्रतिबिम्बवादिभिरुक्तमेव समाधानं वार्त्तिककारा अप्यूचुः ।

सुरेश्वराचार्याणां प्रतिबिम्बवाद एवाभिप्रेत इत्यत्र न केवलमिदं वार्त्तिकं प्रमाणम्, अपि तु श्रीविद्यारण्यैः पूर्वोक्तवार्त्तिकस्य साद्दश्येन गौणतया व्याख्यानमपि (यथाश्रुते प्रतिबिम्बवादबोधनात्) प्रमाणमेव ।

अन्येषां तु वार्त्तिके चिदाभासपदप्रयोगो बहुशोऽभ्यस्तः सुरेश्वरस्य आभासवाद एव संमत इति भ्रान्तिमजनयत् । किञ्च, आभासपदस्य प्रतिबिम्ब एव रूढिः । अत एव "आभास एव च" इति सूत्रे प्रतिबिम्बे आभासपदं प्रयुयोज भगवान् सूत्रकारः ।

अपि च "अत्रैव भगवानमूमुहन्न प्रेत्य संज्ञास्ति" इति मोक्षे जीवनाशङ्कां मैत्रेयीकृतां परिहरन् याज्ञवल्क्यः—"न वा अरेऽहं मोहं ब्रवीम्यविनाशी वा अरेऽयमात्मा अनुच्छित्तिधर्मा" इति जगाद । अनेन च मोक्षे जीवस्य न नाशः, अपि तु मात्राभिरसंसर्ग एवेति परिहारः सूच्यते । यदि च याज्ञवल्क्य आभासवादपरः स्यात्, तदाऽऽभासस्य मोक्षे नाशमेव ब्रूयात्; न ब्रूयात्—अविनाशी वा अरेऽयमात्मेति । वार्त्तिककारोऽपि—

विशेषसंज्ञा याऽस्याऽभूद् विज्ञानात्मादिलक्षणा ।

सम्यग्ध्वस्तमोहस्य सा कृत्स्नाविनिवर्तते ॥

इत्यर्थं वदन् प्रतिबिम्बवादमेवानुसरति, नाभासवादम् ।

—०—

# निपातार्थनिर्णयः

श्रीहरिश्चन्द्रमणित्रिपाठी, अनुसन्धाता
वाराणसेयसंस्कृतविश्वविद्यालयः, वाराणसी

विविधविद्याविचारचातुरीचतुरानेकजनसंकुले भूवलयेऽस्मिन् सन्ति तास्ता भाषाः, तानि तानि च साहित्यानि येषां रचनापरिपाटी विषयविस्फोरणशैली नीरसवस्तुसरसतापादनपद्धति-रैहिकामुष्मिकसुखप्राप्तिसरलसरसपथिनिर्दिष्टिश्च नितरां हृदयङ्गमा निभाल्यत इत्यत्र नास्ति शङ्कापङ्कावकाशः। किन्तु संस्कृतसाहित्यस्य संस्कृतभाषायाश्चैते निखिला गुणाः सर्वातिशायिनो वर्तन्त इति ब्रुवन्तः सहृदयहृदया मनागपि तृप्तिं नाप्नुवन्तीति न परोक्षं प्रेक्षावताम्। शब्दविद्यामुद्दिश्य शाकुन्तलेयशासितकाश्यपीशकलेऽस्मिन् शास्त्रशालि॰रण्या विशदो दोषलेशशून्यो व्यवस्थाकलितकलेवरः स्थिरः प्रौढिमापन्नः सहृदयहृदयावर्जको विज्ञानविनतो यादृशो विचार आत्मलाभमलभत, न तादृशो विमर्शो देशान्तरे श्रुतिगोचरीभवतीति न तिरोहितं गीर्वाणवाणीसमुपासकानां विपश्चिदपश्चिमानाम्। संस्कृतभाषायाः श्रेणीपार्थक्यम्—शब्दानां मूलप्रकृति-प्रत्ययान्वेषणम्, प्रकृत्यर्थप्रत्ययार्थसम्बन्धस्थापनम्, सुबर्थनामार्थनिश्चयनम्, धातुप्रत्ययशक्ति-साधनम्, तत्रापि प्राधान्याप्राधान्यविवेचनम्, व्यपेक्षैकार्थीभावपक्षव्यवस्थापनम्, बाध्यबाधक-भावोद्भावनम्, पदजन्य प्रतीतिविषयपरस्परसंसर्गसाधनम्, शब्दजन्यप्रतीतिकारणसामग्रीपर्या-लोचनम्, पदवाक्यमूलभूतशब्दस्फोटगवेषणम्। न केवलमेतदेव प्रत्युत सकलस्य स्थावर-जङ्गमस्य शब्दकारणतान्वेषणं भरतभूनिवासिसंस्कृतशाब्दिकशार्दूलानां ज्ञानगरिमा चरमां कोटिं निर्दिशति।

समासे काचनातिरिक्ता शक्तिः, आहोस्वित् पदशक्त्यैव निर्वाहः; आख्यातस्य कर्त्तरि कर्मणि च शक्तिः, अथवा कृतौ भावनायां वा? कियन्तः प्रातिपदिकार्थाः? ते च के? कतमस्यौचित्यम्? नञर्थः कः? एवपदार्थः कः? शक्तिश्च बोधजनकतारूपा, वाच्यवाचकभावापरपर्यायरूपा, ईश्वरेच्छारूपा वा? धातोः फलावच्छिन्ने व्यापारे व्यापारावच्छिन्ने फले एकैव शक्तिः, अथवा फले व्यापारे च पृथक् शक्तिः? धात्वर्थव्यापारमुख्यविशेष्यकः शाब्दबोधः, उत प्रथमान्तार्थमुख्य-विशेष्यकः? तत्रापि कर्तृप्रत्यये व्यापारमुख्यविशेष्यकः, कर्मप्रत्यये फलमुख्यविशेष्यकः, कृत्प्रत्यय-

स्थले आश्रयविशेष्यकः; के विभक्त्यर्थाः ? काश्च कारकविभक्तयः ? काश्च न; निपातानां द्योतकत्वं वाचकत्वं वा, निखिलब्रह्माण्डस्य कारणीभूतस्फोटस्य भेदप्रभेदनिरूपणम्—इत्यादिविचारचातुरीपरमरमणीया स्वयंवरवधूर्भारतीयानेव संस्कृतशब्दानुशासनविदो वरान् वृतवती, नान्यान् देशान्तरोद्भवान् विदुष इति नाविदितं विदितवेदितव्यानां तत्रभवतां मेधासमेधितस्वान्तानां सुमनसाम्।

देशस्यास्यैव भारतवर्षस्य परमभागधेयमस्ति यत् परःसहस्राणि हायनानि, शरदः शतानि तपांसि तप्त्वा विशीर्णविविधमला निर्मलमानसा अप्रतिमप्रतिभाः शाब्दिकशार्दूलाः शब्दविद्यावगमाय विज्ञानसरणिसमन्वितानि भूरीणि शब्दशास्त्राणि प्राणैषुः, येन भरतभूवलयस्याद्यापि गौरवमगरायते, मलिनायते चान्यभाषाशास्त्रविदां विदुषां यशोमालिका। अमीषां शब्दशास्त्राणां सामर्थ्येनैव संस्कृतभाषा परमामरतां समधिगच्छति, आत्मनो लोकभाषात्वं विविधभाषाज्यायस्त्वञ्चादधाति। निखिलावयवसम्पन्नस्य भाषाशास्त्रस्य सत्ताविरहादेव भूखण्डस्यानेका भाषा अस्तमिता दुरवगमार्थतां प्राप्तुं विवशा वाऽभूत्। नेमां दशां संस्कृतसरस्वती समन्वभूत्, प्रत्युत शाब्दिकानां स्वार्थशून्यसततप्रयत्नैः परप्रहारशतानि सहमाना सती जीवति, सुतरां सुगमताञ्चैति। खलूक्त्वाधिकम्, एतच्छब्दशास्त्रमन्तराऽऽधुनिकभाषाशास्त्रमतीव विकलमासीदिति वैदेशिकैरपि तस्य स्वशास्त्रेऽतीवोपयोगः कृतः।

एवंविधस्य शासनतः श्रेष्ठस्य, गुणतो गरिष्ठस्य, दुर्मेधसो दविष्ठस्य, मुख्यवेदाङ्गत्वेन प्राप्तप्रतिष्ठस्य शब्दानुशासनस्य प्रधानं निपातरूपाङ्गमधिकृत्य तत्र किञ्चिदधिकृत्य प्रस्तूयते—

शास्त्रेऽस्मिन् सूक्ष्मेक्षिकया पर्यालोच्यमाने निपातार्थविषये पक्षत्रयमक्षिलक्ष्यीक्रियते। तथाहि—अन्वादिनिपातसंसर्गात् प्रतीयमानानामनुभवाद्यर्थानां धातुमात्रत उपसर्गमात्रतश्च बोधानुपलम्भेन, उपसर्गसंसृष्टधातुतो बोधोपलम्भेन चोपसर्गाणां विशेषार्थद्योतकत्वमेव। यथा "अनुभवति" इत्यादावनुभवरूपार्थस्य 'अनु' शब्दो द्योतकः। तदुक्तं हरिणा[1]—

क्वचित् सम्भविनो भेदाः केवलैरनिदर्शिताः।
उपसर्गेण सम्बन्धे व्यज्यन्ते प्रपरादिना॥

इति प्रथमः पक्षः।

क्वचिच्चोपसर्गा वाचका एव। यथा 'प्रतिष्ठते' इत्यादौ धातुर्गतिनिवृत्तिवाचकः, 'प्र' शब्दस्तु गतिवाचकः। प्रोक्तञ्चैतत् हरिणा[2]—

१. वाक्यपदीयम्, २, १८७। २. वाक्यपदीयम्, २, १८८।

"स वाचको विशेषाणां सम्भवाद् द्योतकोऽपि वा"।

इति द्वितीयः पक्षः।

"सम्भूय धातूपसर्गावर्थमाहतुः, उपसर्गस्तु शक्तिमात्रं कुरुते" इत्यर्थाभिधाने सहकारिण उपसर्गाः। उक्तञ्च भर्तृहरिणा[१] —

"शक्त्याधानाय धातोर्वा सहकारी प्रयुज्यते"।

इति तृतीयः पक्षः।

प्राक् प्रतिपादितेषु पक्षेषु कतमो ज्यायान् इति मीमांसायामुपसर्गाणां द्योतकत्वस्य ज्यैष्ठ्यं प्रतिभाति शास्त्रावगाहनविधूततिमिरततिस्वान्तानां सुमनसाम्। 'प्रतिष्ठते' इत्यत्र धातूनामनेकार्थत्वात् 'स्था' धातुरेव गत्यर्थकः 'प्र' शब्दस्तु तद्द्योतक एव। तदुक्तं हरिणा[२]—

स्थादिभिः केवलैर्यच्च गमनादि तु गम्यते।

तत्रानुमानाद् द्विविधात् तद्धर्मा प्रादिरुच्यते॥ इति॥

अस्यायमर्थः—तिष्ठतिर्गतिनिवृत्तिं प्रसिद्ध्याऽभिदधाति। अतस्तेन केवलेन गमनं न प्रतिपाद्यते। "अनेकार्था धातवः" इति कृत्वाऽनुमानाद् गतिवाचकत्वमपि तस्य व्यवस्थाप्यते। उपसर्गस्तु तद्द्योतक एव। धातूनामनेकार्थत्वमुपसर्गाणाञ्च द्योतकत्वमनुमानेन साधयन्नाह—तत्रेति। अनुमानप्रकारश्च—"धातुरनेकार्थः, धातुत्वात्, उभयवादिसम्मतानेकार्थयजधातुवत्"; "'प्र' शब्दो द्योतकः, 'प्र' शब्दत्वात्, प्रपचतीत्यादिदृष्टप्र-शब्दवत्" इति।

एवं चादिनिपातेष्वपि पक्षत्रयं बोध्यम्। तदुक्तं हरिणा[३] —

निपाता द्योतकाः केचित् पृथगर्थाभिधायिनः।

आगमा इव केऽपि स्युः सम्भूयार्थस्य वाचकाः॥ इति।

अत्रापि द्योतकत्वपक्ष एव न्याय्यः, केवलानां चादीनां प्रयोगात्। यदि वाचकाः स्युस्तदा गवादिवत् केवला अपि प्रयुज्येरन्। तस्मात् "चादयो न वाचकाः, केवलानामप्रयोगात्, प्रत्ययवत्" इत्यनुमानं फलितम्। तदुक्तं हरिणा[४]—

चादयो न प्रयुज्यन्ते पदत्वे सति केवलाः।

प्रत्ययो वाचकत्वेऽपि केवलो न प्रयुज्यते॥

---

१. वाक्यपदीयम्, २, १८८।
२. वाक्यपदीयम्, २, १८९।
३. वाक्यपदीयम्, २। १९२।
४. वाक्यपदीयम्, २।१९४।

एवञ्च प्रादीनां चादीनाञ्च निपातानां द्योतकत्वमेवेति हरीणां हृदयम्।

नागेशभट्टस्याप्ययमेव पक्ष इष्टः, [१]मञ्जूषायां भूयोभूयस्तस्यैव समर्थनात्। तदुक्तम्--"अनुभूयते सुखम्, साक्षात्क्रियते गुरुः, इत्यादौ निपातानां द्योतकत्वेनानुभवसाक्षात्काररूपफलयोर्धात्वर्थत्वेन सकर्मकत्वम्। एतेन निपातस्यैव तदर्थकत्वम्" इत्यपास्तम्।

भट्टोजिदीक्षितप्रभृतयः प्राचीनवैयाकरणास्तु निपातत्वावच्छिन्नानां सकलनिपातानां द्योतकत्ववाचकत्वे मन्वते। प्रादीनां द्योतकत्वं चादीनां च वाचकत्वमेवेति नैयायिकरीतिस्तु न साध्वी, वैषम्ये बीजाभावात्। अत एव द्योतकत्वपक्षं व्यवस्थाप्य "निपातानां वाचकत्वमन्वयव्यतिरेकयोः" इत्यादिना वाचकत्वपक्षोऽपि समर्थितो भूषणादौ[२]।

उपसर्गातिरिक्तनिपाता वाचका द्योतकाश्चेति भगवान् महाभाष्यकारः[३]। स हि 'अव्ययं विभक्ति०' इति सूत्रे भाष्ये सुमद्राः, सुमगधाः, सुपुत्रः, इत्यादावव्ययीभावसमासमाशङ्क्य पूर्वपदार्थप्रधानस्याव्ययीभावत्वेनात्र पूर्वपदार्थप्राधान्यं नास्तीत्युक्त्वा "अथ नेमे समासार्था निर्दिश्यन्ते। किन्तर्हि? अव्ययार्था इमे निर्दिश्यन्ते। एतेष्वर्थेषु यदव्ययं वर्तते तत् सुबन्तेन सह समस्यते।" इत्यवोचत्।

[४]कैयटेन च 'अव्ययस्य श्रुतत्वादन्तरङ्गत्वात् तस्यैव विभक्त्या विशेषणानि। तत्र यदोत्तरपदार्थावच्छिन्नाः समृद्ध्यादयः प्रतिपिपादयिषिताः, तदाऽव्ययं समृद्ध्यादीनां वाचकमिति तेषां तदर्थता भवति। 'सुमद्राः' इत्यत्र तु 'मद्र' शब्द एव समृद्धिविशिष्टमर्थमाह, 'सु' शब्दस्तु समृद्धिद्योतको न तु वाचकः" इत्यादि व्याख्यातम्। अनेन भाष्यकैयटव्याख्यानेन स्पष्टमेव निपातानामुभयं प्रतिभाति। उपसर्गाणां तु द्योतकत्वमेव।

"सुट् कात्पूर्वः" इति सूत्रे वार्तिके [५]भाष्येऽपि चैतत् स्पष्टम्। तथा हि—"संचस्कारेत्यादावभ्यासे संजाते साभ्यासस्य करोतित्वात् चात् पूर्वः सुट् स्यात्। मा भूच्चात् पूर्वः, कात् पूर्व एव यथा स्यादित्येवमर्थं कात् पूर्वग्रहणमिति। तत् न, अत्र हि लिटि द्विर्वचनं च प्राप्नोति, सुट् च। तत्राकृते सुटि द्विर्वचनं 'कृ' शब्दस्य प्राप्नोति, कृते तु 'स्कृ' शब्दस्य। सुडपि कृते द्विर्वचने 'चकृ' शब्दस्य प्राप्नोति, अकृते तु 'कृ' शब्दस्येत्युभयोरनित्ययोः

---

१. वैयाकरणसिद्धान्तलघुमञ्जूषा, पृ० ५८४, चौखम्बा संस्कृत सिरीज-संस्करणम्।
२. वैयाकरणभूषणसारनिपातार्थनिरूपणम्, का० ४७।
३. (२।१।६) पा० सू० महाभाष्यम्।
४. (२।१।६) पा० सू० महाभाष्ये कैयटः।
५. (६।१।१३५) पा० सू० महाभाष्यम्।

परत्वात् सुटि कृते तस्य धातुग्रहणेन ग्रहणात् सहैव तेन द्विर्वचने 'शर्पूर्वाः खयः' (७।४।६१) इति खयः शेषे संचस्कारेति सिद्धम् ।"

ननु "पूर्वं धातुः साधनेन युज्यते" इति दर्शने पूर्वं साधनवाचिनि लकारे तदाश्रये च द्विर्वचने एकपदाश्रयत्वादन्तरङ्गे कृते पदद्वयाश्रयत्वाद् बहिरङ्गः सुट् पश्चाद् भवन् चात् पूर्वः स्यात् । 'समस्करोत्' इत्यादौ चान्तरङ्गत्वात् परत्वाच्चाटि कृते तेन व्यवधानान्नैव सुट् स्यात्, विकरणान्तरङ्गभक्तो ह्यडागमस्तमेव न व्यवदध्यात् करोतिं तु व्यवदध्यादेव । इह च 'समस्कृत', संस्कृथाः' इति यत्र करोतिरेवाङ्गं तत्राटः कृग्रहणेन ग्रहणादट एव पूर्वं सुट् स्यात् । अतोऽडभ्यासयोरपि कृतयोः कात् पूर्वः सुट् यथा स्यादिति कर्तव्यं कात् पूर्वग्रहणम् ? न कर्तव्यम्, "अडभ्यासव्यवायेऽपि" इत्येतस्मादेव निर्देशादेतत् सिद्धम् । न च तत्र करिष्यामि कात् पूर्वग्रहणम्, कृतेऽप्यस्मिन्नसिद्धेः । तथा हि--क्रियमाणमप्येतत् कालावधारणार्थं वा स्यात्, करोतेस्तस्यामवस्थायां सुड् भवति यस्यामवस्थायां भवन् कात् पूर्वो भवतीति । तत्र पूर्वस्मिन् पक्षे यद्यप्यन्तरङ्गेऽपि अड्द्विर्वचने बाधित्वा कात् पूर्वग्रहणसामर्थ्यात् पूर्वं सुड् भवति पश्चात् तयोः कृतयोरिष्टं सिद्ध्यति । द्वितीये तु प्रत्युताभ्यासवतोर्निवृत्त्यर्थमेव कात् पूर्वग्रहणं स्यात्, नहि तद्वतोर्भवन् कात्पूर्वः स्यात् ।

स्यादेतत्–न करोत्यवधारणार्थं कात्पूर्वग्रहणम्, किं तर्हि ? अपकृष्य विधिः, करोतेः सर्वत्र सुड् भवति, स तु प्रदेशान्तरे प्राप्तः कात् पूर्वः कर्तव्य इति । एवमपि 'समस्कृत' 'समस्कृथाः' इति सिद्ध्यति, अटः प्राक् प्राप्नुवन् कात्पूर्वो नीयत इति । समस्करोदित्यादौ त्वसिद्धिरेव । कथम् ? प्रदेशान्तरे प्राप्तस्य विधिरपकृष्य भवति । न चात्र सुट् प्राप्तः, अटा व्यवधानादिति कथमपकृष्य विधिर्भवेत् ? कथञ्च "संचस्कार" इत्यादावपि द्विः प्रयोगे द्विर्वचने उच्चारणभेदाच्छब्दभेद इति द्वौ करोती । तत्र यः समोऽनन्तरः, न तस्य ककारः, यस्य च ककारः, नासौ समोऽनन्तरः, इति अप्राप्तत्वाद् न कात् पूर्वं विधीयेत । स्थाने द्विर्वचने च स्थानिवद्भावादेक एव करोतिः । स चाव्यवहित इति कात्पूर्वः प्राप्तः कात् पूर्वः कृत इति न कश्चिद् दोषः । तदेवं धातुः पूर्वं साधनेन युज्यते । ततश्च क्रियमाणेऽपि कात्पूर्वग्रहणे नैवेष्टं सिद्ध्यतीति "अडभ्यासव्यवायेऽपि" इत्येतदेव कर्तव्यम् । कात्पूर्वग्रहणं तु शक्यमकर्तुमिति वार्त्तिककारस्य पक्षः ।

भाष्यकारस्तु—"उभयं न कर्तव्यम् । पूर्वं धातुरुपसर्गेण युज्यते । ततश्चानुत्पन्न एव प्रत्यये 'संकृ' इति स्थिते सुटि कृते लकारः । ततस्तन्निबन्धनावडभ्यासौ ससुट्कस्यैव भविष्यतः । ननु च लब्धस्वरूपा क्रिया विशेषणमाकाङ्क्षति, तल्लाभश्च साधनानन्तर इति पूर्वं

धातुः साधनेन युज्यते। लब्धस्वरूपेति कोऽर्थः ? किं प्रतिपन्नस्वरूपा, उत निष्पन्नस्वरूपा ? निष्पत्तिस्तावद् विशेषणसम्बन्धेनोपयुज्यते, प्रतिपत्तिस्तु विशेषणसम्बन्धात् प्रागपि क्रियायाः सम्भवति। विशिष्टा च क्रिया साधनेन युज्यते। तथा हि—'तिष्ठति' इति गतिनिवृत्तेः साधन-सम्बन्धः प्रतीयते, 'प्रतिष्ठते' इति गतेः, 'गच्छती' ति गमनस्य, 'आगच्छती' त्यागमनस्य, 'करोती' ति व्यापारमात्रस्य, 'संस्करोती' ति भूषणस्य। विशिष्टा च क्रियोपसर्गसम्बन्धे सत्येव प्रतीयत इति द्योतकत्वेन वाचकत्वेन वा पूर्वमुपसर्गसम्बन्धोऽपेक्षणीयः। अवश्यञ्चैतदेवं विज्ञेयम्, अन्यथा भवतेरकर्मकत्वाद् भावे लकार उत्पन्ने पश्चादनुशब्देन सम्बन्धे 'अनुभूयते कम्बलो देवदत्तेन, इति कथं कर्मणि लकारः स्यात् ? अतः 'पूर्वं धातुरुपसर्गेण युज्यते' इत्येतदेव सम्प्रतिपन्नम्।

"एवञ्च पूर्वोक्तन्यायेन सिद्धमिष्टमिति नार्थः कात्पूर्वग्रहणेन, नापि "अडभ्यासव्य-वायेऽपि" इत्यनेन। "गतिर्गतौ" इति सूत्रे भाष्यकैयटयोरपि स्पष्टम्। तत्र हि भाष्यम्[१]—"ननु 'पूर्वं धातुरुपसर्गेण युज्यते पश्चात् साधनेन' इति नैतत् सारम्। पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेण। किं कारणम् ? साधनं हि क्रियां निर्वर्तयति, तामुपसर्गो विशिनष्टि। अभिनिर्वृत्तस्य चार्थस्योपसर्गेण विशेषः शक्यो वक्तुम्। सत्यमेतत्। यस्त्वसौ धातूपसर्गयोरभि-सम्बन्धस्तमभ्यन्तरे कृत्वा धातुः साधनेन युज्यते। अवश्यञ्चैतदेवं विज्ञेयम्। यो हि मन्यते 'पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेण' इति। आस्यते गुरुणेत्यकर्मकः, 'उपास्यते गुरुः' इति केन सकर्मकः स्यात् ?"

अत्र अभिनिर्वृत्तस्येति प्रतीकमादाय कैयटः[२]—"सतो ह्यर्थस्य विशेषणेन सम्बन्धो दृश्यते। साधनायत्तं च क्रियायाः सत्त्वमिति तस्याः प्राक् साधनेन योगः, पश्चादुपसर्गेण। कथमसती साधनेनाभिसम्बध्यत इति चेत्, साधनेन तस्या उत्पाद एव सम्बन्धः। ततश्च साधनादवाप्तजन्मा क्रियोपसर्गेण विशेष्यत इत्युक्तं भवति। नहि साधनादुत्पन्ना क्रियाऽन्यतो विशेषं लभते। अपि तु विशिष्टैव क्रिया साधनेनोत्पाद्यते, ततश्च प्रयोक्ता विशिष्टायाः क्रियायाः साधनेन सम्बन्धं प्रतिपादयितुं सोपसर्गसमुदायं प्रयुङ्क्ते। यथैव यानस्येदं साधनम् न पाका-देरिति प्रतिपादनाय यातेः प्रयोगः, एवमागमनस्येदं साधनम्, न गमनस्येति प्रतिपादयितुं सोप-सर्गस्य प्रयोगः। ततश्च परमार्थतो धातूपसर्गसंघात एव क्रियावाची। पृथगुपदेशस्तु धातूप-सर्गयोरडादिव्यवस्थार्थः। ततश्चान्तरङ्ग उपसर्गयोगो बहिरङ्गः साधनयोगः। केवल आसि-रकर्मक इति, तस्मात् कर्तृभावयोर्लकार उत्पद्यते। उपसर्गयोगे त्वर्थान्तरवृत्तित्वात् सकर्मकत्वाद

१. (८।१।७०) पा० सू० महाभाष्यम्।
२. (८।१।७०) पा० सू० महाभाष्ये कैयटः।

कर्मणि लकारोत्पत्तिः। यदि प्राक् साधनेन सम्बन्धः स्यात्, ततोऽकर्मकत्वात् कर्मणि लकारो नोपपद्येत। तस्मात् क्रियाविशेषणप्रतिपादनाय "पूर्वं धातुरुपसर्गेण युज्यते" इति मन्तव्यम्। एवञ्चोभयसूत्रभाष्यकैयटाभ्यामुपसर्गाणां द्योतकत्वमेव फलति।

द्योतकत्वञ्च समभिव्याहृतगतवृत्त्युद्बोधकत्वं प्रायेण। केचित्तु तत्तद्धातोस्तत्र तत्रार्थे लक्षणा, निपातास्तात्पर्यग्राहकाः। एतदेव द्योतकत्वमित्याहुः। अन्ये तु धातूनामनेकार्थत्वात् धातुप्रयोगे प्रतीयमानेषु सर्वेष्वर्थेषु शक्तिः। उपसर्गसंसर्गस्तु तत्तच्छक्तिसमुद्बोधकः। शक्त्युद्बोधकत्वमेव द्योतकत्वम्। इदमेव 'व्यतिसे' इत्यादौ शक्त्याधायकत्वपदेनोच्यते, इत्याहुः।

क्वचिच्च क्रियाविशेषापेक्षकत्वं द्योतकत्वम्। यथा 'प्रादेशं विलिखति' इत्यादावक्षररूपकर्मणोधात्वर्थेनोपसंग्रहाद् लिखधातोर्जीवत्यादिवदकर्मकत्वेन तद्योगे प्रादेशमिति कारकविभक्तेरनुपपन्नत्वेन विपदेन मानक्रियाया आक्षेपः। क्वचिच्च सम्बन्धविशेषपरिच्छेदकत्वम्। 'जपमनुप्रावर्षत्' इत्यादौ कर्मप्रवचनीयानाम्। अत्र शैषिकी विभक्तिर्न क्रियामाक्षिपति, क्रियाकारकयोः परस्परमवच्छेद्यावच्छेदकभावात्, किन्तु जपवर्षणयोर्हेतुहेतुमद्भावसम्बन्धम्। स च सम्बन्धो निपातक्रियाजनित इत्यनुना व्यज्यते। इदञ्च "कर्मप्रवचनीयाः" इत्यत्र [1]भाष्ये स्पष्टम्। तत्र हि—"कर्म क्रियां प्रोक्तवन्तः कर्मप्रवचनीया इति। भूते 'कृत्यल्युटो बहुलम्' (३।३।११३) इति कर्त्तर्यनीयर्। के च कर्म प्रोक्तवन्तः? ये प्रयुज्यमाने क्रियापदे 'अनुभूयते कम्बलः' इत्यादौ क्रियाविशेषं द्योतितवन्तः। नहि सम्प्रति क्रियाविशेषं द्योतयन्ति। किन्तर्हि? सम्बन्धविशेषम्। तद् यथा शाकल्यस्य संहितामनुप्रावर्षदिति। नह्यत्रानुः 'अनुभूयते' इत्यादाविव क्रियाविशेषं द्योतयति, क्रियापदाभावात्। नापि षष्ठीवत् सम्बन्धमाचष्टे, संहितामिति द्वितीयायास्तदर्थत्वात्। नापि क्रियापदमाक्षिपति। यथा प्रादेशं विपरिलिखतीति 'वि' शब्दो विमानक्रियां = प्रादेशं विमाय परिलिखतीत्यर्थात्। तथा हि सति प्रादेशमितिवत् कारकविभक्तिप्रसङ्गः शेषसम्बन्धस्य वा प्रतीतिप्रसङ्गः। तदेवमनुः संहिताप्रवर्षणयोर्यः शेषसम्बन्धो द्वितीयाभिहितस्तं विशेषेऽवस्थापयति।" उक्तवाक्ये प्रयुज्यमानस्य निशमेर्या क्रिया, तत्कृतः संहिताप्रवर्षणयोर्यः सम्बन्धो हेतुहेतुमद्भावलक्षणः, तमनुशब्दो द्योतयति। कर्मप्रचनीयसंज्ञायां सत्याम् कर्मप्रचनीययुक्ते द्वितीया' (२।३।८) इति द्वितीया भवति। तदुक्तं हरिणा[2]—

क्रियाया द्योतको नायं सम्बन्धस्य न वाचकः।
नापि क्रियापदापेक्षी सम्बन्धस्य तु भेदकः॥

---

१. (१।४।८३) पा० सू० महाभाष्यम्।
२. वाक्यपदीयम् २।२०४।

'अथ शब्दानुशासनम्' इत्यत्र 'अनेकक्रियाविषयस्यापि शब्दानुशासनस्यारम्यमाणताऽथशब्दसन्निधाने प्रतीयते' इति वदता 'कैयटेनापि क्रियापेक्षकत्वं द्योतकत्वं स्पष्टमेवोररीकृतम्।

अत्र नैयायिकाः—प्रजयतीत्यादौ प्रकृष्टजयादिर्नोपसर्गवाच्यः। एवं सति तस्याप्रकृत्यर्थतयाऽऽख्याातार्थकृतावनन्वयापत्तेः, 'प्रकृत्यर्थान्वितस्वार्थबोधकत्वं प्रत्ययानाम्' इति व्युत्पत्तेः। न च जयो धात्वर्थः प्रकर्षः 'प्र' शब्दार्थः, नामार्थधात्वर्थयोर्विभक्त्यर्थमद्वारीकृत्य साक्षाद् भेदसम्बन्धेन नान्वय इति व्युत्पत्त्या तस्य तथापि धात्वर्थेऽन्वयासम्भवात्। अर्थान्तरस्येषोपसर्गं विनाप्येतदर्थप्रत्ययापत्तिभिया विशिष्टजयोऽपि न धात्वर्थः। तस्माद् जये क्लृप्तशक्तेः प्रकर्षे शक्तावुपसर्गाणां शक्त्यवच्छेदकत्वम्। शक्ततावच्छेदके विशेषणत्वमात्रमेव शक्त्यवच्छेदकत्वम्।

अत्र च 'अनुभूयते सुखम्' इत्यत्रोपसर्गस्यानुभववाचकत्वे धातोरकर्मकत्वात् कर्मणि लकाराद्यानापत्तिः, स्वार्थफलव्यधिकरणव्यापारवाचकत्वमेव सकर्मकत्वमिति भाषणात्। अन्यथा यत् किञ्चित् फलवैयधिकरण्यस्य सर्वत्र सत्त्वेनातिप्रसङ्गः स्यात्। तस्मादुपसर्गाणां द्योतकत्वम्, चादीनां तु वाचकत्वमेव। 'साक्षात्क्रियते' इत्यादौ विषयतासम्बन्धेन प्रत्यक्षादिरूपतत्फलवाचकत्वस्य 'साक्षात्' पदादेः सम्भवात् तदुत्पत्त्यनुकूलो व्यापारो धात्वर्थः। तथा च 'साक्षात्क्रियते गुरुः' इत्यादौ गुर्वभिन्नाश्रयनिष्ठो विषयतासम्बन्धेन यः साक्षात्कारः, तदुत्पत्त्यनुकूलो व्यापार इति बोधः। उपसर्गातिरिक्तनिपातानां वाचकत्वे 'साक्षात्प्रत्यक्षतुल्ययोः'

"अलं भूषणपर्याप्तिशक्तिवारणवाचकम्"

"उरर्यूरी चोररी च विस्तारेऽङ्गीकृतौ त्रयम्"

इत्यादिकोशवचनानि[2] नमःपदस्य लोके नमस्कारार्थत्वप्रसिद्धिश्चोपोद्बलकमवधारणीयम्। अत्र सकर्मकत्वं तु स्वस्वयुक्तनिपातान्यतरार्थफलव्यधिकरणव्यापारवाचकत्वम्। तादृशफलाश्रयत्वमेव कर्मत्वमिति न कर्मणि लकारानुपपत्तिरित्याद्याहुः।

तदपि न विचारकोटिमधिरोहति मेधाविनाम्; उपसर्गाणां निपातानां द्योतकत्वमन्येषां निपातानां वाचकत्वमित्यर्धजरतीयस्यानौचित्यात्। एवमेवोभयोस्तु वाचकत्वं द्योतकत्वं वा। तत्र च वाचकत्वस्य प्रत्याख्यानादन्त्यः पक्ष एव साधीयाः। 'अनुभूयते', 'साक्षात्क्रियते' इत्यनयोरभेदस्य ब्रह्मणापि प्रत्याख्यातुमशक्यत्वात्, सिद्धान्ते कर्मसंज्ञकार्थान्वय्यर्थकत्वरूप-

---

१. महाभाष्ये पस्पशाह्निककैयटः।
२. अमरकोशे, ३।४।२५२,२५४।

सकर्मकत्वस्वीकारेण द्योतकतामन्तरा गत्यभावाच्च, "लः कर्मणि" (३।४।६६) इत्यादौ तेन रूपेण बोधस्य दुर्लभत्वाच्च, अन्यतरघटितस्य तार्किकाभिमतस्य सकर्मकत्वलक्षणस्य भेदघटितत्वादतिगुरुत्वे । दुर्ज्ञेयत्वाच्च ।

अथ च 'ओदनः पचति' इत्यत्र कर्मत्वसंसर्गेण धात्वर्थपाकेऽन्वयवारणायाभेदातिरिक्त-सम्बन्धेन नामार्थप्रकारकशाब्दबोधं प्रति प्रत्ययजन्योपस्थितिहेतुर्वाच्यः । एवञ्च साक्षात्पदाद्यर्थ-साक्षात्कारस्य धात्वर्थे साक्षादन्वयो न स्यात् । यदि साक्षात्कारादिधात्वर्थः स्यात् तदा स्तोकं पचतीत्यत्रेवाभेदान्वयो भवत्येव । तथा च सति 'साक्षात्' पदस्यापि तद्वाचकत्वे मानाभावाद् द्योतकत्वमेव वाच्यम् । अनुशासनञ्च द्योत्यार्थवत्त्वमादाय नानुपपन्नम् । शोभनः समुच्चयो द्रष्टव्य इतिवत् शोभनश्चेत्यपि स्यात् । अपि च प्रादीनां वाचकत्वे 'भूयान् प्रकर्षः' 'कीदृशो निश्चयः' इतिवद् 'भूयान् प्र' 'कीदृशो निः' इत्यपि स्यात् । शाब्दिकनये च प्रादेरनर्थकत्वान्न तदन्वय इत्यत एव प्रादयो द्योतका भविष्यन्तीत्यपि चादिषु समम् ।

ननु 'वृक्षौ' इत्यत्र द्वित्वं ब्रुवन् प्रत्ययो यथा परविशेषणत्वेनैव ब्रूते, तद्वच्चकारादिः समुच्चयं वदन् परविशेषणत्वेनैव ब्रूत इत्येकत्र विशेषणत्वेनान्वितस्यापरत्र विशेषणायोग इति सिद्धान्ताद् न विशेषणान्वय इति चेत्, न; प्रत्ययानां प्रकृत्यर्थगतस्वार्थबोधकत्वव्युत्पत्तेस्तत्र तथा स्वीकारेऽप्यत्र स्वातन्त्र्येण पदादुपस्थितिसत्त्वेन विशेषणान्वयस्य दुर्वारत्वात् ।

अत्रेदं तत्त्वम्—अप्रामाण्यज्ञानानास्कन्दितप्रतीतिबलात् कतिपयनिपातानां वाचकत्वमप्य-वश्यमभ्युपेयम् । अत एव 'न' इत्यतोऽभावबोधः सर्ववादिमतेऽनुभूयते, अभावशब्दवत् कस्येति जिज्ञासा समुदेत्यतत्त्वविदामपि । अपि च 'आ नो दिवो बृहतः पर्वतादा' इत्यत्र पर्वताद-र्वाक्' इत्याद्यर्थबोधात् 'आ' इत्यस्य वाचकत्वं पिधातुं कः प्रभवेत् । तथा च[१] निरुक्ते-'उपसर्गा अर्थान् निराहुः' इत्युपक्रमेऽर्थविकरणम्, 'आ' इत्यर्वागर्थे, इति स्पष्टमेवोदीरितम् । द्योतकत्वे हि दिग्योगलक्षणपञ्चम्या अनुपपत्तिः स्यात्, तदर्थस्य विशेषणता च स्यात्; अत एव "स्त्रियाम्" इति सूत्रे भाष्ये[२] स्त्रीत्वस्य प्राधान्ये वचनानुपपत्तिर्द्योतकतापक्षमवलम्ब्य परिहृता । "हेतुमति च" इति सूत्रभाष्ये[३] च द्योतकतापक्षे 'हेतुमति' इत्यस्य प्रकृत्यर्थविशेषणत्वमुक्तम् ।

---

१. निरुक्ते अ० १ ख० ३ ।

२. (४।१।३) पा० सू० महाभाष्यम् ।

३. (३।१।२६) पा० सू० महाभाष्यम् ।

हरिणाप्युक्तम्[1]—

निपाता द्योतकाः केचित् पृथगर्थाभिधायिनः ।
आगमा इव केऽपि स्युः सम्भूयार्थस्य वाचकाः ॥ इति ।

'नामाख्यातमुपसर्गो निपाताः' इत्यादि [2]प्रातिशाख्यमपि मानत्वेनावधारणीयम्। 'शरैरुस्रैरिव' इत्यादौ द्योतकतापक्षेऽपि उस्रसदृशैः शरैरित्यर्थो न युक्तः; प्राक् प्रतिपादितपद्धत्या द्योत्यार्थस्य विशेषणत्वनियमात्। किञ्चैवं 'घनश्यामः' इत्यादौ विग्रहे समासे च 'घन' शब्दस्य घनसदृशपरत्वेनोपमानत्वेन बोधकानि पदानि सामान्यधर्मविशिष्टोपमेयवचनैः समानाधिकरणैः सह समस्यन्ते, इत्यर्थकेन "उपमानानि सामान्यवचनैः" (२।१।५५) इति समासानापत्तिः; तस्योपमेयपरत्वेनोपमानपरत्वाभावात्। भूतपूर्वगतिरपि प्रकृते न निर्वाहसम्पादयित्री; विग्रहवाक्येऽपि तस्योपमेयपरत्वात्। 'घनेन तुल्यः' इत्यत्रोपमानपरत्वेऽपि तस्य विग्रहत्वाभावात्। वृत्तिविग्रहयोरुपमानवाचकत्वग्रहणमुचितम्; प्रत्यासत्तेः। 'घनेन तुल्यः' इति वाक्यं तु न विग्रहः, तथा सति मृगचपलेत्यत्र पुंवत्त्वानापत्तिः; दर्शनीया माता' इत्यत्र पुंवत्त्ववारणाय वृत्तौ विग्रहे च सामानाधिकरण्यस्य पुंवत्त्वप्रयोजकत्वात्। केवलघनादिशब्दप्रयोगे उपमानत्वविशिष्टवाचकत्वं दुरुपपादमेव। एवं सादृश्यसम्बन्धेन पूर्वपदार्थस्योत्तरपदार्थेऽन्वयेऽपि पुंवत्त्वानुपपत्तिः। अथ च 'श्याम' शब्दस्योपमेयपरत्वेन घने तदन्वयाभावेन तस्य साधारणधर्मवैशिष्ट्येनेतरपरिच्छेदकत्वरूपोपमानत्वानुपपत्तिः। तथा चोक्तं भाष्ये—"यदि 'शस्त्रीव श्यामा देवदत्ता' इति विग्रहः, तदा शस्त्र्यां श्यामेत्येतदपेक्ष्यं स्यात्। यदि यथा 'शस्त्री श्यामा तद्वद् देवदत्ता' इति विग्रहः, तदा देवदत्तायां श्यामेत्येतदपेक्ष्यं स्यात्" इति। एवञ्चोपर्युक्तसन्दर्भेणोपसर्गाणां कतिपयनिपातानाञ्च द्योतकत्वम्, कतिपयनिपातानाञ्च वाचकत्वं निर्विवादं साधितं भवति।

—००—

१. वाक्यपदीयम्, २।१९२।
२. ऋग्वेदप्रातिशाख्यम्, द्वादशं पटलम्, सू० १७।

# आलङ्कारिकभामहस्य दोषविषये किञ्चित्

श्रीजगन्नारायणपाण्डेयः अनुसन्धाता

वाराणसेयसंस्कृतविश्वविद्यालयः, वाराणसी ।

आलङ्कारिकाणामाचार्यभरतमुनेरनन्तरं भामहाच्च पूर्वं बह्वयः शताब्दयो निविडतिमिराच्छन्ना एव व्यतीताः, यतो हि तात्कालिकानामालङ्कारिकाणां नामानि तत्कार्याणि चाद्यावधि सन्त्यपरिचितान्येव । यद्यपि भामहात् पूर्वमेव मेधाविरुद्रस्य नामाचार्यत्वेन श्रूयते, तथा कविकुलशेखरेण राजशेखरेणापि [1]काव्यमीमांसायां मेधाविरुद्रो जन्मान्धकविरूपेण वर्णितो लोचनपथमधिरोहति । परमिदानींपर्यन्तं नहि केनाऽप्यवलोकितस्तन्निर्मितः कश्चित् प्रबन्धः । अतो भरतमुनेरनन्तरं केषामपि संस्कृतविद्याजुषां विदुषां विशेषतः संस्कृतसाहित्यसौहित्यपरिष्कृतशेमुषीमतां सम्भवतो न भवेत् किमपि नवमिव विज्ञापनीयं महालङ्कारिकस्य भामहस्याभिधानीयम् । किञ्च तद्ग्रन्थमदृष्टवतामपि शास्त्रदृष्टिगतानां विपश्चितां काव्यप्रकाशाद्यध्ययनाध्यापनकाले नियतमेव भामहसम्मतेन मतेन लोचनगोचरीभूतेन भवितव्यम् ।

अथालङ्कारतत्त्वमर्मज्ञा नैकेऽभूवन् । तेषां दर्शनान्यपि प्रायेण परस्परभिन्नान्येव व्यवस्थितानि । तद्यथाह समुद्रबन्धोऽलङ्कारसर्वस्वटीकायाम्[2]—"विशिष्टौ शब्दार्थौ काव्यम् । तद्वैशिष्ट्यं धर्ममुखेन, व्यापारमुखेन, व्यङ्ग्यमुखेनेति त्रयः पक्षाः" इति । तत्र धर्मोऽपि द्विविधः, नित्योऽनित्यश्च । अत्रानित्यधर्मोऽलङ्क्रियतेऽनेनेति करणव्युत्पत्त्या सिद्धोऽलङ्कारः । नित्यधर्मस्तु गुण एव । एवं व्यापारोऽपि द्विविधः—वक्रोक्तिर्भावकत्वञ्च । तदित्थं प्राधान्येन पञ्चरूपतया व्यवस्थितोऽयमालङ्कारिकसमयः ।

यत्र खल्वलङ्कारा एव काव्ये प्रधानम्, तैरेव वैशिष्ट्यं काव्यस्य, तैरेवोद्भासिता भगवती कविभणितिः परमचमत्कारचरमभूः, स तावत् प्रथमः पक्षो भामहोद्भटादीनाम् । यत्र पुनर्माधुर्यादिगुणैः परिनिष्ठापितप्राणा रीतिरेवात्मा काव्यस्य, स द्वितीयः पक्षो वामनादीनाम् । यत्र वैदग्ध्यवचनभङ्गिरूपा वक्रोक्तिरेव सहृदयहृदयमुन्मादयन्ती काव्यात् स्यन्दमानानन्दस्य निदानरूपत्वं भजते, असौ तृतीयः पक्षः कुन्तकादीनाम् । अभिधातो द्वितीयो विभावादीनां साधा-

---

१—प्रत्यक्षप्रतिभावतः पुनरपश्यतोऽपि प्रत्यक्ष इव । यतो मेधाविरुद्रकुमारदासादयः जात्यन्धाः कवयः श्रूयन्ते । का० मी० ४ अ० पृ० ३५ ।

२—अलङ्कार स० पृ०४, स० गणपतिशास्त्री ।

रणीक णात्मको भावकत्वव्यापारः काव्ये यत्र चारुत्वनिष्पत्तिहेतुतामुपयाति, स तुरीयः पक्षो भट्टनायकप्रभृतीनाम्। यत्र च न्यग्भावितवाच्याद्यर्थोऽभिधादिविलक्षणप्रकारेण व्यञ्जनाख्येन व्यापारेणाभिव्यक्तो नवनवायमानो व्यङ्ग्यार्थः काव्यस्य चरमचमत्कारितामादधाति, स पञ्चमः पक्ष आनन्दवर्धनप्रभृतीनाम्।

एवमालङ्कारिकाणां मतानां प्रभृतेषु भेदेषु सत्स्वपि प्रथमपक्षसंस्थापकानामाचार्याणां विशिष्टोऽपि सन् भामहो निखिलैरेवालङ्कारिकप्रवरैरुपजीव्यतया तत्तद्ग्रन्थेषु परमादरेण सम्भावितो दरीदृश्यते। अत एवालङ्कारपरिष्कारकर्मोद्भटेन भट्टोद्भटेनास्य काव्यालङ्कारमाश्रित्य विवरणनाम्नी विशिष्टा टीका निरमायि।

काश्मीरवास्तव्यो भामहो[१] रक्रिलगोमिसूनुरिति तेन स्वयमुदीरितम्। अस्य कालनिर्णयवेलायां मिथो विवदमाना दृश्यन्ते विद्वांसः। विषयेऽस्मिन् तन्निर्मितकाव्यालङ्कारेऽपि प्राप्यते सङ्केतः। काव्यालङ्कारस्य पञ्चमपरिच्छेदे प्रमाणनिरूपणावसरे भामहेन बौद्धनैयायिकदिङ्नागमतानुसारमेव प्रत्यक्षलक्षणमकारि। तत्र दिङ्नागस्य [२]कालः ४०० ईस्वीयवर्षकल्पो मन्यते ऐतिह्यविद्भिः। अनेन भामहेन तत्परवर्तिना भाव्यम्। किञ्च भट्टिकाव्यस्यान्ते—

[३]व्याख्यागम्यमिदं काव्यमुत्सवः सुधियामलम्।
हता दुर्मेधसश्चास्मिन् विद्वत्प्रियतया मया॥

इति श्लोको वर्तते। एतत्सदृशः—

[४]काव्यान्यपि यदीमानि व्याख्यागम्यानि शास्त्रवत्।
उत्सवः सुधियामेव हन्त दुर्मेधसो हताः॥

श्लोकोऽयं भामहस्य काव्यालङ्कारेऽवाप्यते। अनयोः कस्तावत् प्राचीनतर इति मतभेदे सत्यपि साधुपरीक्षणानन्तरं ज्ञायते यद् भट्टिकविना काव्यालङ्कारे व्याख्यागम्यकाव्यस्य निन्दामवलोक्य स्वव्याख्यागम्यकाव्यस्य च निन्दां स्मारं स्मारं समाधानरूपेणायं श्लोको विरचित इति। अपि च भामहस्यालङ्कारनिर्देशक्रमेणैव कविर्भट्टिरपि स्वकाव्येऽलङ्कारविनि-

१. सुजनावगमाय भामहेन, ग्रथितं रक्रिलगोमिसूनुनेदम्। का० अ० ६।६४
२. सं० सा० इ० पृ० ४३६ ( वाचस्पतिगैरोला )
३. भट्टिका० २२।३४
४. भा० अ० १।२०

वेशनमकार्षीत्। अतो भामहस्य भट्टिकवेरपि पूर्ववर्तित्वं सिद्ध्यति। डा० [1]काणेमहोदयस्य कथनानुसारं भट्टिः स्वजन्मना ५०० ईस्वीयवर्षानन्तरं ६५० ईस्वीयवर्षात् प्रागेव भारतभुवं समलञ्चकार। भामहो बाणभट्टस्यापि पूर्ववर्तीति विदुषां सम्मतं मतम्। इत्थमाचार्य-भामहस्य कालः षष्ठशतके निर्णीयते तज्ज्ञैः।

काव्यालङ्कारः

भामहनिर्मितः काव्यालङ्कारः खलु निखिलालङ्कारनिबन्धनानामादिमः सकला-लङ्कारिकाणामुपजीव्यतामादधानः कोऽप्यपूर्वो ग्रन्थः यं प्रकाण्डग्रन्थतरुं समाश्रयन्ती भामहकीर्ति-वल्लरी सर्वत्रैवालङ्कारजगति विरचितरसिकमनःसम्मोदं स्वकीयसरसामोदं वितन्वानेव वरीवर्ति। स्वल्पकायेऽप्यस्मिन् ग्रन्थे भूयसामलङ्कारसिद्धान्तानां प्रभूतश्चयो विदुषश्चमत्कुरुते। किञ्चिदपि तावद् हृदयावर्जकं वस्तु लेशतो दृष्टं श्रुतं वा सम्पूर्णतयाऽवलोकनाय कमिव नितरां नोत्कण्ठयति? अतो मन्ये यद् भामहीयकाव्यालङ्कारो बहुतरग्रन्थविदितसारोऽपि सर्वाङ्गीणतयाऽनवगतः सर्वानेव संस्कृतसाहित्यरसिकान् केनाऽप्यलङ्कारसंस्कारेण रहितानिव चिरं संभावयति। नाट्य-शास्त्रे प्रतिपादितानां स्फुटालङ्कारतत्त्वानां चिरसञ्चरणकं रणरणकं दूरीकृत्य नवं किमपि कामनीयकञ्चोररीकृत्यायं विश्वेषां विदुषां सम्मोदाय जातः। यद्यपि मुनिप्रणीतं नाट्यशास्त्र-मेतदपेक्षया प्राचीनतरमिति सत्यम्, परं तत् प्राधान्येन दृश्यकाव्यतत्त्वविमर्शायैव प्रवर्तितम्, न तु श्रव्यकाव्यालङ्कारशास्त्रीयवस्तुतत्त्वनिरूपणाय। अत एवालङ्कारशास्त्रपरम्परायामालङ्कारिक-पितामहतया भामह एव जेगीयते, न भरतमुनिः।

अत्र सन्ति षट् परिच्छेदाः। काव्यालङ्कारस्य षष्ठपरिच्छेदे स्वयमेव या भामहेन निरूपि-तानां विषयाणामनुक्रमणिकोपस्थापिता तदनुसारं षष्टिकारिकासु काव्यशरीरम्, शतषष्टिकारिका-स्वलङ्काराः, पञ्चाशता दोषनिरूपणम्, सप्तत्या न्यायनिर्णयः, षष्ट्या शब्दशुद्धिः, इत्येवं प्राधान्येन पञ्च विषयाः षट्परिच्छेदेषूपपादिता विद्यन्ते[2]। कारिकाणां गणनेयं स्थूलदृष्ट्यैव कृता भामहेनेति प्रतीयते, यतो हि तन्निर्देशानुसारं काव्यालङ्कारे चतुश्शतकाभिः कारिकाभिर्भाव्यम्, परं तत्रैकस्याः कारिकाया हानिरवलोक्यते।

---

१. संस्कृतसाहित्येतिहासः पृ० १०५ (विश्वनाथभारद्वाजः)

२. षष्ट्या शरीरं निर्णीतं शतषष्ट्या त्वलङ्कृतिः। पञ्चाशता दोषदृष्टिः सप्तत्या न्यायनिर्णयः॥
षष्ट्या शब्दस्य शुद्धिः स्यादित्येवं वस्तुपञ्चकम्। उक्तं षड्भिः परिच्छेदैर्भामहेन क्रमेण वः॥
का० अ० ६।६५,६६

कतिपयानालङ्कारिकानपहाय अस्य 'शब्दार्थौ काव्यम्' इति काव्यलक्षणविषये भामह-सम्मतेन मतेन प्रायः सर्वेषामेवाभिमतेन भूयते। द्वितीयपरिच्छेदे भरतमुनिनिगदितानां दशगुणानामत्रैव सर्वप्रथमं त्रिषु गुणेष्वन्तर्भावं प्रतिपादयता भामहेन स्वकीयसूक्ष्मसूक्ष्मतर-निरीक्षणप्रतिभायाः परिचयः प्रादायि। इमामेव सरणिमनुसृत्य राजानकमम्मटभट्टैरपि दशगुणानां त्रिषु गुणेष्वन्तर्भावं विदधद्भिः—

[1]'केचिदन्तर्भवन्त्येषु दोषत्यागात् परे श्रिताः।
अन्ये भजन्ति दोषत्वं कुत्रचिन्न ततो दश॥

इति सोद्घोषं प्रतिपादितम्। वस्तुतः काव्यालङ्कारे नाट्यशास्त्राश्रितमप्यलङ्कार-शास्त्रं स्वतन्त्रतया विराजतेतराम्।

प्राक्तनेष्वालङ्कारिकेषु भामहेन यावता विस्तारेण विविधकाव्यसंबन्धिविषयैस्सह दोषाणां स्वरूपं निरूपितम्, न तथा केनचिदन्येनालङ्कारिकेण। हि निखिलस्यापि काव्यालङ्कारस्यार्धांशकल्पे दोषवर्णनमेव नयनपथमायाति। काव्यस्यान्येषां तत्त्वानामिव दोषविषयेऽपि भामहेन क्रमबद्धता नाङ्गीकृता। काव्यालङ्कारस्य तावत् प्राधान्येन स्थलत्रये दोषा विवेचिता विद्यन्ते। तत्र सर्वादौ प्रथमपरिच्छेदे रीतिसमालोचनावसरे क्रमं विनैवाचार्येण [2]नेयार्थादिषट्सामान्यदोषा निरूपिताः। तदनन्तरमेव श्रुतिदुष्टप्रभृतीनां [3]चतुर्णां वाणीदोषाणां वर्णनं लोचनगोचरीभवति। अत्र एतेषां दोषाणां निरूपणविषये कश्चित् समीचीन आधारो नावलोक्यते। न च समेषां दोषाणां लक्षणान्युदाहरणानि च। यथा क्लिष्टस्याहोस्विद् गूढशब्दाभिधानस्य लक्षणं तु वर्तते, परमुदा-हरणं नास्ति। एतद्विपरीतं श्रुतिकटुश्रुतिदुष्टयोरुदाहरणे स्तः, परं लक्षण एव न वर्णिते।

दोषनिरूपणस्य द्वितीयं स्थलं वर्तते, द्वितीयः परिच्छेदो यत्रोपमालङ्कारस्य [4]हीनत्वादि-सप्तदोषा वर्णिता विद्यन्ते। विषयेऽस्मिन् आचार्यभामहोऽपि मेधाविरुद्रस्याधमर्णः, यथोक्तं तेनैव [5]स्वकीयकाव्यालङ्कारे। आलङ्कारिकप्रवरेणानेन यमकालङ्कारस्य विवेचनमुपस्थापयता

---

१. का० प्र० ८।७२।

२. नेयार्थं क्लिष्टमन्यार्थमवाचकमयुक्तिमत्।
गूढशब्दाभिधानञ्च कवयो न प्रयुञ्जते॥ का० अ० १।३७

३. श्रुतिदुष्टार्थदुष्टे च कल्पनादुष्टमित्यपि।
श्रुतिकष्टं तथैवाहुर्वाचां दोषं चतुर्विधम्॥ का० अ० १।४७

४. हीनतासम्भवो लिङ्गवचोभेदो विपर्ययः।
उपमानाधिकत्वञ्च तेनासदृशताऽपि च॥ का० अ० २।३९

५. त एत उपमादोषाः सप्त मेधाविनोदिताः।
सोदाहरणलक्ष्माणो वर्ण्यन्तेऽत्र च ते पृथक्॥ का० अ० २।४०

प्रत्यपादि यत् प्रसिद्धैः शब्दैः सुश्लिष्टपदसन्धिभिश्च गुम्फितमोजस्विप्रसादगुणोपेतं सुखेन चोच्चारयितुं शक्यं यमकं तावत् कवीनां कृते भवत्युपादेयं सामाजिकानाञ्चाभिमतमिति। अतः काव्यं तदेव वरं भवितुमर्हति यस्यातिशयेन व्याख्या नापेक्ष्यते। यदि सरसकमनीयं शरीरं काव्यमपि क्लिष्टगुणगुम्फितं जातम्, तर्हीतरशास्त्रेभ्यस्तस्य किं तावद् वैशिष्ट्यम्? भवन्तु नाम तादृशेन क्लिष्टशब्दसंयोजनेनामन्दानन्दतुन्दिलाः केचन पण्डितम्मन्याः, परं प्रकृति-सुकुमाराणां कृते तेन किमपि न सेत्स्यति। एवं यमकालङ्कारस्य [1]हेयत्वमुपपादयता भामहेनोक्तं यदप्रसिद्धधात्वर्थगभीरा दुर्बोधशब्दगुम्फिता च रचना नहि यमकतया वक्तुं शक्यते, अपि तु वस्तुतः सा प्रहेलिकामात्रम्। प्रसङ्गेऽस्मिन् उदाहरणवेलायां भामहेन [2]श्रीरामशर्माभिधेयस्य विदुषोऽच्युतोत्तरं नाम काव्यमेवोट्टङ्कितं यन्मन्ये निकृष्टयमकपदावलीगुम्फितं स्यात्, परमद्य तन्नहि प्रत्यक्षज्ञानविषयतामुपयाति।

ततो निखिलेऽपि चतुर्थे पञ्चमे च परिच्छेदे दोषाणां व्यापकं वर्णनमवाप्यते। वस्तुत इमौ दोषपरिच्छेदरूपेण वक्तुं शक्येते। चतुर्थपरिच्छेदस्यारम्भे भामहेन [3]अपार्थव्यर्थप्रभृति-दशदोषा विवेचिताः। अन्तिमो दोषस्तु पञ्चमपरिच्छेदारम्भे प्रतिपादितः। अस्यान्तिमस्य प्रतिज्ञाहेतुदृष्टान्तहीनाभिधेयस्य दोषस्याद्युद्भावक आचार्यभामह एव। आचार्यदण्डिना[4] तु कर्कशमिमं मत्वाऽस्योपेक्षा कृता, तदुत्तरवर्तिभिरप्यालङ्कारिकैर्नायमुरीकृतः। तत्कारणं काव्येन सह तद्दोषस्य साक्षात् संबन्धाभाव एव।

तत्रोद्देशो लक्षणं परीक्षा चेति दिशा काव्यालङ्कारे प्रतिपादितानां दोषाणां मध्ये लक्ष-णोदाहरणपरीक्षणपुरस्सरं केवलं सामान्यदोषाणां वाणीदोषाणाञ्चात्र सविशेषं मया निरूपणं करिष्यते। सर्वतः प्राग् रीतिविवेचनप्रसङ्गे भामहेन [5]नेयार्थ-क्लिष्ट-अन्यार्थ-अवाचक-अयुक्तिमद्-गूढशब्दाभिधानानां षड्दोषाणां वर्णनमकारि। अथ तेनैव तेषां दोषाणां पृथक् पृथग् लक्षण-पुरस्सरमुदाहरणमप्युपस्थापितम्।

---

१. काव्यान्यपि यदीमानि व्याख्यागम्यानि शास्त्रवत्।
उत्सवः सुधियामेव हन्त दुर्मेधसो हताः॥ भा० अ० २।२०

२. नानाधात्वर्थगम्भीरा यमकव्यपदेशिनी।
प्रहेलिका साह्युदिता रामशर्माच्युतोत्तरे॥ भा० अ० २।१९

३. अपार्थं व्यर्थमेकार्थं ससंशयमपक्रमम्। शब्दहीनं यतिभ्रष्टं भिन्नवृत्तं विसन्धि च॥
देशकालकलालोकन्यायागमविरोधि च। प्रतिज्ञाहेतुदृष्टान्तहीनं दुष्टञ्च नेष्यते॥
भा० अ० ४।१, ४।२

४. का० द० ३।१२७

५. भा० अ० १।३७

## सामान्यदोषाः

(१) [1]नेयार्थम्—यस्य पदस्यार्थो विद्वद्भिः स्वयमेव न प्रतीयते, अपि तु तदवगमाय तैः प्रसह्य पृथग् यत्नो विधीयते तत्पदं झटिति तात्पर्यार्थावबोधनेऽक्षमत्वान्नेयार्थदोषेण दुष्टं जायते ।

यथा—

[2]मायेव भद्रेति यथा सा चासध्वी प्रकल्पना ।
वेणुदाकेरिति च तां नयन्ति वचनाद् विना ॥ इति ।

अस्मिन्नुदाहरणे 'मायेव भद्रा' इति कथनस्य तात्पर्यं न स्फुटीभवति । वेणुदाकिपदमपि कस्मिन्नर्थे प्रयुक्तमिति न ज्ञायते । ताताचार्यस्तु वेणुदाकिरिति कस्यचित् प्रबन्धस्य नायकः, भद्रा च नायिका । भद्रा वेणुदाकेर्मायैवासीत्, यथा मायया कश्चिद् मोहमुपैति, तथैव भद्रया वेणुदाकिरपि सम्मोहितो बभूवेति मन्यते । अत्रेदं विचारणीयं यद् वस्तुतो वेणुदाकिपदस्य तावत् कोऽर्थ इति । नागनाथशास्त्रिणा त्वेवं प्रतिपादितं यत् सम्भवतोऽत्र वेणुदाकेरितिस्थाने वेणुदारेदिति पाठेन भवितव्यम् । वेणुदारिर्बाणासुरतनयः, असुरतनयत्वाच्च मन्येऽसौ मायानिष्णातो भवेत् । अनया रीत्या 'वेणुदारेः मायेव भद्रकारिणी' इत्यर्थोऽवगम्यते । अपि कदाचित् तेन स्वमायया किमपि माङ्गलिकं कृत्यं सम्पादितं भवेत् ।

अपरैः सुधीभिस्तु वेणुदाकिपदेन मुरलीवादको भगवान् कृष्णो गृह्यते । तथा हि वेणुं दाकयतीति व्युत्पत्त्या व्यञ्जनया वंशीवादकः श्रीकृष्ण इत्यन्येषामाशयः । किन्तु दक्धातुः, दाकिर्वेति नामधातुर्नावलोक्यते सिद्धान्तकौमुद्यां कुत्रचिदपि । अनेनोपर्युक्तविग्रहप्रकारोऽपाणिनीय इव प्रतीयते ।

मन्मते तु वेणुं दयते रक्षति या सा वेणुदा, भगवत आह्लादिनी शक्तिस्तां कायति अन्तर्भावितण्यर्थतया शब्दाययति योऽसौ वेणुदाकः करुणावरुणालयः श्रीकृष्णः, तस्यापत्यं वेणुदाकिः प्रद्युम्नरूपतया कामदेवः । अथवा वेणुवंशस्तं दारयति दीर्घ-दीर्घतरफूत्कारेण पीडयतीति लक्षणया [3]वेणुदारः कृष्ण, तस्यापत्यं मदनः । एवं वेणुदाकेरिति भवतु वेणुदारेरिति वा, उभयथापि मदनरूपार्थ एव सिद्ध्यति । मदनश्च कियान् मायावीति जानन्त्येव सहृदयाः । इत्थं वेणुदाकेः ( वेणुदारेः ) मदनस्य असाध्वी मायेव ( कवेः ) कल्पना भद्रा ( कल्याणमयी ) प्रतीयते ।

---

१. भा० अ० १।३८
२. भा० अ० १।३९
३. कर्मण्यण् ।

आदेशरूपं किमपि प्रामाणिकं वचनं विनाऽपि निरङ्कुशाः खलु कवयस्तां नयन्ति (समाद्रियन्ते) पूर्वं जनैरनभीष्टः सन्नपि कामो यथा स्वविविधविलासैः पश्चात् तान् सर्वानपि प्रकामं विलक्षणामन्दानन्दसन्दोहे निमज्जयति, तथैव सुकविप्रयुक्ताऽलौकिक्यपि प्रतिक्षणं नवनवायमाना कल्पनाकल्पवल्ली सचेतसां चेतांस्यनुरञ्जयति, अतः कवयस्तां प्रति बद्धादरा भवन्तीति तात्पर्यं यथाकथञ्चित् प्रतीयते।

वस्तुतस्तु प्रकृतिस्थले कोऽप्यर्थो निर्णीतो न विद्यते। केवलं येन केनापि प्रकारेण कवेरभिप्रायाविष्कार एव विविधाः प्रयत्नाः सञ्जाताः। किञ्च इवशब्दप्रयोगानन्तरं पुनर्यथाशब्दस्य पृथक् प्रयोगो नेयार्थात् प्रागेव झगिति भामहोदीरितमेकार्थदोषमत्र प्रसह्य सहृदयानां हैयङ्गवीनहृदये स्मारयति।

काव्यं हि तदेव वरं यस्यार्थो द्रागेव सहृदयहृदयान्युद्वेलयेत्। प्रकृते तु विविधप्रयासानन्तरमपि विवक्षितार्थो न सम्प्रतीयत इति नेयार्थदोषप्रसरः। अतीवविलम्बेनापि तात्पर्यनिर्णयस्य सम्यक् प्रतीत्यभाव एवास्य दूषकताबीजम्।

(२-३) [1]क्लिष्टोऽन्यार्थश्च - यत्र तावद् विवक्षितार्थपरिज्ञाने मध्ये किञ्चिद् व्यवधानमापतेत् तत्रार्थनिर्णये काठिन्यात् क्लिष्टदोषो जायते। कविविवक्षितार्थावगमे क्लेश एवास्य दूषकताबीजम्।

यत्र तु शब्दस्यान्यार्थे प्रसिद्धेऽपि तद्भिन्नार्थे प्रयोगो विधीयते तेनाभिमतार्थबोधो न भवति। अतस्तत्रान्यार्थो नाम दोष उत्पद्यते।
क्रमेणोदाहरणं यथा—

'विजह्रुस्तस्य ताः शोकं क्रीडायां विकृतञ्च तत्' इति। अत्र प्रथमपादः क्लिष्टस्योदाहरणमुत्तरार्द्धश्चान्यार्थस्य। ता रमण्यस्तस्य शोकमपाकृतवत्यः, तच्च शोकापाकरणं रतिक्रीडायां जातमित्यर्थः। अत्र विजह्रुरितिक्रियापदस्य हरणरूपोऽर्थो विवक्षितः, स चार्थः केवलं 'हृ' धातोरेव, न तु विशेषणविशिष्टस्यापि तस्य विहरणरूपार्थाधायकत्वात्। एवमत्र अरंसिषुरित्यर्थस्य वि-इत्युपसर्गेण व्यवधानात् क्लिष्टो नाम दोषः।

किञ्च 'विकृतम्' इत्यत्र कृतमित्यस्य स्थाने विपूर्वकं कृतमिति प्रतिपादयता कविना कृतपदस्य तात्पर्यमेव विकृतं कृतम्। एवमत्र तात्पर्यार्थाप्रतीतौ सञ्जातोऽन्यार्थदोषावतारः। यो हि धातुर्यस्मिन्नर्थे निर्धारितस्तज्ज्ञैस्तस्य प्रयोगः तस्मिन्नेवार्थे विधीयमानः सन् समीचीनतामञ्चति। तत्र कदाचिद् धातव उपसर्गविशिष्टा अपि स्वार्थं न परित्यजन्ति, परं प्रायेणोपसर्ग-

---

१. भा० अ० १।४०।

बलाद् धातूनामर्थेषु महदन्तरमपि लोचनपथमवतरति। तथा हिं हृधातुर्हरणार्थे प्रसिद्धः, स चेत् प्रपूर्वकस्तर्हि प्रहारकरणरूपमर्थं द्योतयति। आ-इत्युपसर्गपुरस्सरस्य तु [1]हृधातोर्भोजनमित्यर्थो जायते। संपूर्वकाद् हृधातोर्विनाशरूपोऽर्थोऽवतंसनरूपो वाऽर्थोऽवगम्यते। एवमेव विपूर्वक-हृधातोर्विहरणं परिपूर्वकाच्च परित्याग इत्यर्थो भवति। इत्थं हृधातोर्मूलार्थेन सह एतेषामर्थानां महान् भेदः सुस्पष्टः। अमुमेवाशयमुररीकृत्य वैयाकरणभट्टेन श्रीभट्टोजिदीक्षितेन सिद्धान्तकौमुद्यां सोद्घोषमुद्घोषितं नयनपथमायाति—

[2]उपसर्गेण धात्वर्थो बलादन्यः प्रतीयते।
प्रहाराहारसंहारविहारपरिहारवत् ॥ इति।

अतः सुकविभिर्नूनमिमौ दोषौ परित्याज्यौ।

यद्यप्युभयोरपि दोषयोः साम्यमिव प्रतिभाति, परं वस्तुतः किञ्चिदस्ति सूक्ष्ममन्तरम्। पूर्वस्मिन् वाक्ये विजहुरिति शब्दस्यार्थः शोकशब्दसाहचर्येण यथाकथञ्चिद् ज्ञातुं शक्यः, किन्त्वपरस्मिन् वाक्ये तादृशं किमपि पदं नावलोक्यते येन विकृतमित्यस्यार्थः कृतमिति विदध्यात्। अतोऽत्रान्यार्थे विवक्षितार्थप्रतीतिरेव नहि सञ्जायत इत्ययमेवोभयोर्भेदः।

(४) [3]अवाचकः—न वाचक इत्यवाचकः। साक्षात् सङ्केतितार्थप्रतिपादक एव शब्दो [4]वाचको भवति। स चार्थः स्वार्थे रूढः। यस्तु शब्दः साक्षात् कस्मिंश्चिदर्थे न भवति रूढोऽसाववाचक इत्यभिधीयते। यत्र वाच्यार्थज्ञानाय एतादृक्छब्दः प्रयुज्येत यस्य तस्मिन्नर्थे प्रसिद्धिर्न स्यात्, तत्र तात्पर्यज्ञाने विलम्बातिशयात्, सहृदयहृदयोद्वेगजनकत्वादवाचक-दोषोऽवतरति। यथा—

[5]हिमापहामित्रधरैर्व्याप्तं व्योम······इति।

अस्य पद्यांशस्य मेघैर्गगनं व्याप्तमिति तात्पर्यम्। अत्र कविना मेघार्थे हिमापहामित्र-धरशब्दस्य प्रयोगोऽकारि। तथा हि हिमस्य तुषारस्य अपहो विनाशको वह्निः, तस्यामित्रं शत्रु-र्जलम्, तद्धारयतीति जलधरो मेघ इति शब्दार्थः। जलदरूपमर्थं प्रकटयितुं हि नहि कुत्रापि

१. ··· ··· ··· ··· ···जाग्धिस्तु भोजनम्।
जेमनं लेह आहारो निघासो न्याद इत्यपि ॥ अ० को० २।९।५५, ५६।
२. सि० कौ० सू० (८।४।१८)
३. साक्षादरूढं वाच्येऽर्थे नाभिधानं प्रतीयते। भा० अ० १।४१।
४. साक्षात सङ्केतितमर्थमभिधत्ते स वाचकः। का० प्र० २ उ०, ९ सू०।
५. भा० अ० १।४१।

अमरकोशहलायुधप्रभृतिकोशेष्वेतादृशी शब्दयोजना नयनपथगामिनी भवति। अत एव हिमापह्यामित्रधरशब्दस्य मेघार्थेऽवाचकत्वादत्रावाचकदोषप्रसक्तिः। विवक्षितार्थप्रतिपादने शब्दस्यासामर्थ्याद् विलम्बेन पाठकैस्तात्पर्यमवगम्यते। इदमेवास्य दूषकताबीजम्।

(५) अयुक्तिमत्—आलङ्कारिकपितामहेन भामहेनायुक्तिमतो लक्षणं नाकारि, परमुदाहरणद्वारा प्रतीयते यद् यत्र वाग्विलासशून्यैश्चन्द्रमेघपवनादिभिरव्यक्तवाणीप्रवीणैश्च हंसभ्रमरादिभिः काव्ये दौत्यादिवर्णनं विधीयते, तत्र युक्त्यानौचित्यादयुक्तिमन्नाम दोषो विजृम्भते।

यथा—[1]मेघभ्रमरादीनां दौत्यादिवर्णनम्।

ये खलु मेघपवनप्रभृतयो वाणीविहीना आहोस्विद् येषां हारीतचक्रवाकादीनां वागेव न स्फुटा ते विप्रकृष्टं स्थानं गत्वा कथं दौत्यकर्म कर्तुं क्षमाः? एतादृशं वर्णनं नहि युक्तियुक्तं प्रतिभातीति भामहस्याशयः। आलङ्कारिकेणानेन दोषस्यास्य प्रकल्पनं नूनं कविकुलगुरोः कालिदासस्य मेघदूतसदृशानि दूतकाव्यानि श्रवणगोचरीकुर्वतैव कृतम्। किन्तु निर्जीवस्यास्पष्टवाग्विलासस्य वा कस्यचित् पदार्थस्य प्रेमप्रसङ्गे दौत्यकर्मणि नियुक्तिस्तथा प्रणये उत्कण्ठातिशयस्य सद्योऽभिव्यक्तिर्वस्तुतोऽद्वितीयप्रतिभावतो महाकवेर्मौलिककल्पनाया मधुरो विलासः। अस्य समाधानमपि स्वयमुपस्थापितं कविताकामिनीविलासेन कालिदासेन '[2]कामार्ता हि प्रकृतिकृपणाश्चेतनाऽचेतनेषु' इति। अत एव काव्यकलामर्मज्ञेन श्रीमता भामहेन सम्यग् विचार्य पुनरुक्तं यच्चेत् कश्चिद् वियोगी कदाचिदुन्मत्त इव भाषेत तदा न दोषाय, यतः प्रायेण एवं [3]सुमेधोभिरपि निःशङ्कं प्रयुज्यत इति।

अयुक्तिमद्दोषस्य निरूपणं कुर्वताऽपि भामहेनान्यदोषवदस्य दोषत्वं नोररीकृतमिति 'सुमेधोभिः प्रयुज्यते' इति तत्कथनादेव सिद्ध्यति। वस्तुतोऽस्मिन् विषये साहित्ये एतावन्ति रमणीयान्युदाहरणानि लोचनगोचरीभवन्ति यत्र सहृदयधुरीणैरपि नित्यममन्दानन्दोऽनुभूयते। कस्तावत् सहृदयो भवन् नैषधीयचरितस्य हंसदमयन्तीसंवादं स्मारं स्मारं हर्षप्रकर्षेण तुन्दिलो न भविष्यति? अतोऽस्यापि दोषकुक्षौ निपातो नैवोपयुज्यते। अस्मादेव भामहानन्तरं दण्डिवामनप्रभृतिभिः कैश्चिदप्यालङ्कारिकैर्नायं दोषो वर्णितः।

(६) गूढशब्दाभिधानम्-आचार्यभामहेनास्य दोषस्य लक्षणमनुक्तवता केवलमिदमेवोदीरितं यद् गूढशब्दाभिधानस्य प्रयोगो न विधेयः, यतो विदुषामपि नेदमुपकाराय [4]कल्पत

---

१. भा० अ० १।४२, ४३।     २. पूर्वमेघः, श्लोक ५।
३. भा० अ० १।४४।     ४. भा० अ० १।४५।

इति। गूढानां कठिनानां (दुर्व्याख्येयानां) शब्दानामभिधानं कथनं यत्र तदिति विग्रहेण ज्ञायते यद्यत्र कठिनकठिनानां शब्दानां शब्दतो विधानं क्रियते, तत्र गूढशब्दाभिधानदोषोऽवतरति। गूढः शब्दस्तावत् स एव यस्यार्थो विद्वद्भिरपि महता प्रयासेनावगम्येतेति। यच्छब्दस्यार्थ एव झटिति न रसिकशेमुषीमधिरोहेत् किमसौ गुणाय भवेत्? यथा—

[1]असितर्तितुगद्रिच्छित् स्वःक्षितां पतिरद्विदृक्।
अमिद्भिः शुभ्रदृग्दष्टैर्द्विषो जेघ्नीयिषीष्ट वः॥ इति।

अस्य विकटशब्दच्छटापटीयसः श्लोकस्य षडाननस्तव शत्रूणां भूयो भूयो विनाशं क्रियादिति भावः। तथाहि—गमनार्थकाद् ऋधातोर्निर्मितोऽयमृतिशब्दो मार्गशब्दपर्यायः। असितः = कृष्णः, ऋतिः = मार्गं यस्यासौ हुताशनः। [2]अमरकोशेऽग्निशब्दपर्याये कृष्णवर्त्मेति-शब्दोऽपि पठितो दृश्यते। तुक् = सन्ततिः, असितर्तितुक् = वह्नितनयः कार्तिकेयः, अस्यैव अद्रिच्छित् स्वःक्षितां पतिः, अद्विदृगिति च विशेषणत्रयम्। अद्रिं पर्वतं छिनत्तीति क्रौञ्च-पर्वतविदारक इत्यर्थः। महाकविकालिदासेनापि [3]मेघदूते स्कन्दस्य स्मरणं क्रौञ्चदारणनाम्ना कृतम्। स्वः = स्वर्गः, तत्र क्षिताम् = निवासिनां देवानामिति यावत्, पतिः = स्वामी, कार्तिकेयो देवतानां सेनानायक आसीत् अतस्तदाश्रित्य कविना पतिरिति निगदितम्। न द्विदृगिति द्वादशनेत्रः स्कन्द इत्यर्थः, अमिद्भिः क्रूरैः शुभदृग्दष्टैः = उज्ज्वलकटाक्षनिःक्षेपैः तव शत्रून् जेघ्नीयिषीष्ट = हन् धातोर्यङन्तादाशीर्लिङि प्रथमपुरुषैकवचनस्य रूपमिदम्, पौनःपुन्येन विनाशं क्रियादित्यस्यार्थः।

अत्र हि पर्वतखननादुदपद्यत मूषिकेतिवद् दीर्घकालं यावद् विवक्षितार्थगवेषणतत्परैः सामाजिकैर्महत्कष्टेनार्थो ज्ञायते। वस्तुतो नेदं काव्यम्, अपि तु काव्यविस्फोटमात्रमिति मन्तव्यम्। अतोऽस्य दूषकत्वं सुतरां सिद्धम्। यशःप्रियैः सुकविभिरवश्यमयं दोषो यत्नैः परित्याज्यः।

## वाणीदोषाः

आचार्यभामहेनादौ षट् सामान्यदोषान् सन्निरूप्य काव्यालङ्कारस्य प्रथम एव परिच्छेदे श्रुतिदुष्ट-अर्थदुष्ट-कल्पनादुष्ट-श्रुतिकष्टभेदेन [4]चत्वारो वाचां दोषा उद्भाविताः।

---

१. भा० अ० १।४६।
२. अग्निर्वैश्वानरो वह्निः······। अ० को० १।१।५३
वर्हिःशुष्मा कृष्णवर्त्मा शोचिष्केश उषर्बुधः॥ अ० को० १।१।५४
३. पूर्वमेघः, श्लोक० ४५
४. श्रुतिदुष्टार्थदुष्टे च कल्पनादुष्टमित्यपि।
श्रुतिकष्टं तथैवाहुर्वाचां दोषं चतुर्विधम्॥ भा० अ० १।४७

(१) श्रुतिदुष्टम्—श्रुतिः श्रवणम्, तत्र दुष्टमिति। यद्यप्यस्य दोषस्य लक्षणं नोक्तं भामहेन, तथापीदन्तु प्रतिपादितमेव यत् के तावच्छब्दाः श्रुतिदुष्टा इति। ते च शब्दा [1]विड्वर्चोविष्ठितक्लिन्नच्छिन्नवान्तप्रवृत्तिप्रचारधर्षितोद्गारप्रभृतयः। यत्र हि कश्चिद् द्वयर्थकः शब्दः स्ववाच्यार्थं सुष्ठु प्रतिपादयन्नपि कञ्चिदन्यं जुगुप्सितमश्लीलं वाऽर्थं प्रकटयति, तत्र श्रवणमात्रेण प्रकृत्याऽश्लीलाद्यर्थप्रतीत्या श्रुतिदुष्टं पदं वाक्यं वा जायते। अत्र दिङ्मात्रमुदाह्रियते—

यथा—विडिति शब्दो वैश्यरूपार्थे विष्ठार्थे च प्रसिद्धः। एतयोः प्राथमिकोऽर्थः समीचीनः परं द्वितीयोऽर्थो जुगुप्साव्यञ्जक इति श्रुतिदुष्टः। सम्बाधशब्दस्यैकोऽर्थः सङ्घर्षोऽपरश्च योनिरूपः, इत्यश्लीलव्यञ्जकत्वात् श्रुतिदुष्टो नाम दोषः। एवमेव हदविसर्गवाक्काटवप्रभृतिष्वपि सुधीभिः श्रुतिदुष्ट एवावधेयः। एतादृशानां जुगुप्साव्यञ्जकानां तथाऽश्लीलगन्धावलेपितानां शब्दानामध्ययनेन सचेतसां चेतसि झटिति तत्काव्यं प्रति घृणाभावोदयादश्रद्धोत्पद्यते। अनेन तादृशानां पदानां पठने श्रवणे वा तेषां प्रवृत्तिरपि न भवति। इदमेवास्य दूषकताबीजम्। अतः श्रुतिदुष्टाः शब्दाः स्वप्नेऽपि निर्मलयशोऽभिलाषुकैर्भावुकैः कविभिर्न प्रयोज्याः।

(२) [2]अर्थदुष्टम्—यत्र खलु सभ्यार्थप्रतिपादकैः शब्दैरसभ्यार्थस्य प्रतीतिरपि सञ्जायते तत्रार्थे दुष्टत्वादर्थदुष्टाभिधो दोष उत्पद्यते। अर्थदुष्टे यो हि शब्दः प्रयुज्यते तत्रापाततो नहि कश्चिद् दोषः प्रतीयते, परं तद्द्वारा प्रतिपादितेनार्थेनाश्लीलत्वमपि द्योत्यते। अर्थप्रतीत्यनन्तरमेवात्र दोषप्रतीत्याऽर्थदुष्टता, श्रुतिदुष्टे तु शब्दश्रवणमात्रेणैवाश्लीलार्थावगम इति तयोर्भेदः। यथा—

[3]हन्तुमेव प्रवृत्तस्य स्तब्धस्य विवरैषिणः।
पतनं जायतेऽवश्यं कृच्छ्रेण पुनरुन्नतिः॥ इति।

उदाहरणेऽस्मिन् दुष्टस्य पुरुषस्य वर्णनं कविनाऽवतारितम्, परं तैरेवार्थविशेषैः पुरुषलक्ष्मविशेषरूपस्याश्लीलार्थस्यापि प्रतीतिः सुतरां जायते। तथा हि दुष्टपक्षे हन्तुम्=मारयितुं प्रवृत्तस्य स्तब्धस्य=मौनावलम्बिनः, छिद्रान्वेषिणो दुष्टस्य पतनमवश्यम्भावि, परं

---

१. भा० अ० १।४८
२. अर्थदुष्टं पुनर्ज्ञेयं यत्रोक्तं जायते गतिः।
   असभ्यवस्तुविषया शब्दैस्तद्वाचिभिर्यथा॥ भा० अ० १।५०
३. भा० अ० १।५१

तदुन्नतिः=विकासः कष्टेन भवतीति। अन्यत्र तु हन्तुम्=योनिं ताडयितुं प्रवृत्तस्य, स्तब्धस्य=स्थिरस्य विवरैषिणः=योनिं प्रवेष्टुकामस्य, पतनम्=शैथिल्यम्, अवश्यम्भावि, किन्तु तस्योन्नतिः=काठिन्यं कृच्छ्रेण=विलम्बेनायातीति तात्पर्यम्। अत्र श्लोके प्रयुक्ताः शब्दाः, स्वयमदुष्टाः परं तथापि दुष्टविषयकार्थेन सह पुरुषलक्ष्मविशेषरूपार्थप्रतीतिरपि दुर्वारा यत्र खल्वश्लीलत्वम्। अत एवास्यार्थदुष्टत्वं सङ्गच्छते।

(३) [1]कल्पनादुष्टम्—यत्र हि कयोश्चिद् द्वयोः पदयोर्मिथः संयोजनादभीष्टार्थेन साकमनभीष्टार्थप्रतीतिरपि सम्भवा, तत्र कल्पनया दुष्टत्वात् तत् पदं कल्पनादुष्टदोषेण ग्रस्तं जायते। यथा—स शौर्याभरण इति।

अत्र शौर्य-आभरणशब्दयोः सन्ध्यनन्तरं याभेदिपदेन मैथुनरूपोऽनभीष्टोऽप्यर्थः प्रतीतिपथमवतरति। यद्यपि स शूर इत्यर्थ एव कविविवक्षितस्तथापि सहृदयकल्पनया अश्लीलार्थप्रतीतेः पद्यांशोऽयं कल्पनादुष्टदोषेणाङ्कितः सन् हेयत्वमुपगतः। कल्पनादुष्टे तावदुभावपि शब्दौ निर्दोषौ भवतः, किन्तु तयोर्मिथः सम्मेलनेन तदंशेन कश्चिदनभीष्टोऽप्यर्थोऽवभासते। दोषोऽयं द्वयोः शब्दयोः सन्निधाने सत्येव सम्भाव्यते, नान्यथेति सुधीभिरवधेयम्।

(४) [2]श्रुतिकष्टम्—भामहेनास्यापि लक्षणं नोदीरितम्। अनेन श्रुतिकष्टपदेन तस्य कोऽभिप्राय इति न सम्यग् ज्ञायते। केवलं नामविचारस्पृशा दृशा वक्तुमिदं पार्यते यद्यस्य शब्दस्य पदस्य वा कष्टमनुभूयते रसिकैस्तच्छ्रुतिकष्टेन दुष्टमिति भामहीयो राद्धान्तः।

यथा—अजिह्लदत् इति।

आनन्दार्थकाद् ह्लाद्धातो=र्णिचि लुङि प्रथमपुरुषैकवचनमिदं रूपम्। अत्र हकारलकारयोः संयोगात् तदुच्चारणे कर्णकटुत्वात् नवनीतस्वान्तैः सामाजिकैः पठने कष्टमनुभूयते। एतादृशानां शब्दानां प्रयोगे सति काव्ये नीरसतायाः साम्राज्यं प्रसरीसरीति, इतीदमेवास्य दोषबीजम्। यद्यपि भामहेनोक्तं यत् केचिदालङ्कारिका गण्डशब्दमपि श्रुतिकष्टकुक्षावामनन्तीति, परं सूक्ष्मेक्षिकया विचारिते सति गण्डशब्दे श्रुतिकष्टत्वं तु न तथा विजृम्भते यथाश्लीलत्वम्।

---

१. पदद्वयस्य सन्धाने यदनिष्टं प्रकल्पते।
तदाहुः कल्पनादुष्टं स शौर्याभरणो यथा॥ भा० अ० १।५२।

२. भा० अ० १।५३।

लोके हि आभीरप्रभृतिनिम्नवर्गीयाणां जनानां मिथः कलहवेलायां भाषायां पुरीषोत्सर्गेन्द्रियार्थे प्रकृतशब्दस्य प्रयोगो बाहुल्येन श्रूयते। परमेतावताऽपि संस्कृतसाहित्ये वदनैकदेशेऽर्थे व्याकरणशास्त्रमाश्रित्य [1]कपोलार्थे प्रयुज्यमानोऽयं गण्डशब्दो बहुत्रोपलभ्यत इति पृथग् दोषमध्ये न गण्यते। अत एव महाकविकालिदासेन स्वीयाभिज्ञानशाकुन्तले[2] कविकुलविभूतिना भवभूतिना चोत्तररामचरिते[3] शब्दोऽयं सादरमुरीकृतोऽवलोक्यते।

## दोषपरिहारः

काव्यतत्त्वानां सूक्ष्मनिरीक्षणविचक्षणेनाचार्यभामहेन स्वनवनवोन्मेषशालिना प्रतिभावैभवेन दोषाणामेतेषां परिहारविषयेऽपि चारुविचारः कृतः। क्वचिच्छन्दानां सन्निवेशवैशिष्ट्येनाहोस्विदाश्रयसौन्दर्यवशादेते दोषा अपि तथैव गुणायन्ते यथा [4]सुमनसां मालायां मध्येमध्ये सन्निवेशकलावैशिष्ट्येन ग्रथितं नीलपत्रमपि शोभतेतराम्। किञ्च [5]यथाञ्जनं प्रकृत्या कृष्णवर्णमन्यस्मिन् कस्मिंश्चिदङ्गे प्रयुज्यमानं सत् सौन्दर्यापहारकं सदपि कामिनीनां कटाक्षाश्रयमेत्य स्वयं विराजते नयनयोश्च सौन्दर्यं वर्धयित्वा सहृदयहृदयान्यावर्जयति, तथैव दोषा अपि समुचितसाहचर्यमेत्य विदुषां परमतोषायैव जायन्ते, न तु सौन्दर्यशोषायेति। क्रमेणोदाहरणं यथा—'आपाण्डुगण्डमेतत्ते वदनं वनजेक्षणे'। अत्र तावत् कविः कस्याश्चिदुदासीनाया नायिकाया वदनसौन्दर्यं प्रतिपादयन् नायकमुखेन निगदति—हे कमलाक्षि! तवाननमापाण्डुगण्डमिति भावः। यदि गण्डशब्दोऽत्र भवेदेकाक्येव, तदा दोषकुक्षौ नूनं निपतेत्; परं पाण्डुशब्दस्य साहचर्येणासावपि श्लोकमुपस्कुर्वन् [6]अनुप्रासालङ्कारतामुपयाति। तस्य निर्दोषतेयं सन्निवेशवैशिष्ट्यादेव सिद्धयति।

आश्रयसौन्दर्येणादोषत्वं यथा—'विक्लिन्नगण्डानां करिणां मदवारिभिः' इति।

अत्र करिणां संसर्गाद् गण्डशब्दो निर्दुष्टो जातः। एवमाश्रयसौन्दर्यबलाद् गण्डशब्दस्यादोषता सिद्धयति। प्रथमतस्तु कविभिर्दुष्टानां शब्दानां प्रयोग एव न कर्तव्यः, परं चेत्कदा-

---

१. गण्डौ कपोलौ। अ० को० २।६।९०।

२. एतावताऽपि मे पीडा न संवृत्ता, यतोऽयं गण्डस्योपरि विस्फोटकः संवृत्तः। अभि० शा० २ अं० पृ० ८५, चौखम्बा संस्कृत सीरीज—संस्करणम्।

३. कण्डूलद्विपगण्डपिण्डकषणाकम्पेन सम्पातिभिः। उ० रा० च० २।९

४. भा० अ० १।५४।

५. भा० अ० १।५५।

६. सरूपवर्णविन्यासमनुप्रासं प्रचक्षते। भा० अ० २।५

चिन्नियमस्योल्लङ्घनम्, तदा सन्निवेशवैशिष्ट्यादाश्रयवैशिष्ट्याद्वा तेषां शब्दानां दूषण-तक्षणपुरस्सरमेव प्रयोगो विधेयः। यथा कश्चिन्मालाकारः सुमनसामर्हतां साधु विज्ञाय ततो यथोचितक्रमेण स्रजं ग्रथ्नाति, शुष्काणि नीरसानि च पुष्पाण्यपाकरोति, तथैव लोकोत्तरवर्णना-निपुणं काव्यं सकलशास्त्रव्यवहारकुशलैः सुकविभिर्यथोचितं ललितललिताभिः कोमलकान्त-पदावलीभिरेव निर्मातव्यम्, दुष्टानि च पदानि सर्वतोभावेन परित्याज्यानीत्यवधेयम्।

भामहेनोपमादोषातिरिक्तं सामान्यदोष–वाणीदोष–अन्यदोषभेदेन वर्णत्रये दोषविभागो व्यधायीति मया पूर्वमेव निवेदितम्। तत्रान्यदोषकुक्षौ समाविष्टा दोषास्तु प्रायेणाचार्य-भरतोद्भावितैः [१]निगूढप्रभृतिभिस्सहातिशयेन साम्यं भजन्ते, परं सामान्यदोषाणामथ च वाणीदोषाणां किं तावन्मूलमिति न विज्ञायते। एतद्विवेचनप्रकरणेनापि नहि परिस्फुरति यद् वाणीदोषपदेन भामहस्य कोऽभिप्राय इति। किञ्च सामान्य–अन्यदोषेषु मिथः किं मौलिक-मन्तरमित्यपि मानसपटलं नाधिरोहति। यदि वाणीदोषाः शब्ददोषाः स्युस्तदा श्रुतिकटुः समीचीनः, श्रुतिदुष्टोऽपि यथाकथञ्चित् तत्रागमिष्यति, किन्तु कल्पनादुष्टस्तथाऽर्थदुष्ट इत्युभौ शब्ददोषकुक्षौ कथङ्कारमागमिष्यतः? मन्ये, आलङ्कारिकवामनोक्ताश्लीलदोषस्य जुगुप्सा-व्रीडाऽमङ्गलभेदानां क्रमेण इम एव पर्याया इति। अपि तात्कालिकपण्डितमण्डलीषु काव्य-दोषाणामिमानि त्रीण्यपि रूपाणि चर्चितानि भवेयुः, अत एवाचार्यभामहेनापि त्रयाणा-मुपपादनं कृतं भवेत्।

प्रायः प्रतिशास्त्रं प्रारम्भे आगमनशैल्याः प्रयोगो विधीयत इति प्राचीनोऽयं सिद्धान्तः। भामहकाले संस्कृतवाङ्मये समालोचनाशास्त्रं स्वशैशवावस्थायामवर्तत। तदानीं संप्राप्तानां काव्यानां विश्लेषणपुरस्सरं विशेषेण सामान्योपलब्धिर्विधीयते स्म। गुणदोषालङ्कारादीनामपि विवेचनमनयैव रीत्या अजायत। कैश्चिदाचार्यैः स्वकल्पनया षड् दोषा उद्भाविताः स्युः, कैश्चिच्च द्वितीयवर्गीयाश्चत्वारो दोषाः। अन्यैश्चाचार्यप्रवरैस्तृतीयवर्गीयाणां दोषाणामुद्भावनं स्वसूक्ष्मेक्षिकया भरतमुनिमाश्रित्य कृतं स्यात्, काव्यतत्त्वमर्मज्ञेन श्रीमता भामहेन चैतेषां त्रयाणामपि समावेशः स्वकाव्यालङ्कारे लक्षणोदाहरणपुरस्सरं विहितः। अनेना-लङ्कारिकशेखरस्य भामहस्य विचारगाम्भीर्यमलङ्कारशास्त्रस्य च प्रकाण्डपाण्डित्यं निसर्ग-सिद्धम्। किञ्च श्रुतिकष्टदोषस्य निर्दोषतां स्वसूक्ष्मतत्त्वस्पृशा दृशा प्रतिपादयन्, अलङ्कारशास्त्रे च सर्वप्रथमं नैकेषां नवनवानां दोषाणामुद्भावनं कुर्वन् आचार्यभामहः प्रसह्य सचेतसां चेतस्यालङ्कारिकपितामहतयाऽऽत्मानं स्मारयितुं तादृशीं श्रद्धामुत्पादयति। वस्तुतो भामहोऽल-ङ्कारतत्त्वमर्मज्ञ इत्यत्र न मनागपि संशयावकाशः। यद्यपि काव्यालङ्कारे दोषविषये बहुवक्तव्य-मस्ति, तथापि लेखविस्तरभिया केवलं सामान्यदोषान् वाणीदोषांश्च निरूप्य समासेन विरमामीत्यलं विस्तरेण।

—००—

१. निगूढमर्थान्तरमर्थहीनमेकार्थं भिन्नार्थमभिप्लुतार्थम्।
न्यायादपेतं विषमं विसन्धिशब्दच्युतं वै दश काव्यदोषाः॥ ना० शा० १६।८९

# धर्म और उसकी व्याख्याएँ

डा० इन्द्रचन्द्र शास्त्री, एम० ए०, पी० यच० डी०

धर्म' शब्द संस्कृत की 'धृ' धातु से बना है, जिसका अर्थ है धारण करना। जो तत्त्व व्यक्ति तथा समाज को धारण करते हैं उन्हें धर्म कहा गया। कुछ परम्पराओं ने समाज को मुख्यता दी, कुछ ने व्यक्ति को। धारण की परिभाषा भी किसी ने भौतिक अस्तित्व को लेकर की और किसीने आध्यात्मिकता को। तदनुसार व्याख्याएँ बदलती गईं। स्थूल रूप से उन्हें चार श्रेणियों में विभक्त किया जा सकता है। (१) पुस्तक-मूलक (२) व्यक्ति-मूलक (३) दृष्टि मूलक और (४) लक्ष्य-मूलक।

(१) पुस्तकमूलक

जेमिनि ने धर्म की व्याख्या नीचे लिखे अनुसार की है :—

'चोदनालक्षणोऽर्थो धर्मः,' मीमांसासूत्र (१।१।२) 'चोदना' का अर्थ है वेद की आज्ञाऐं, वे जिन वस्तुओं का प्रतिपादन करती हैं वे ही धर्म हैं। जैमिनि के अनुसार वेद का एकमात्र प्रतिपाद्य विधि या निषेध है। उसमें ऐसा कोई वाक्य नहीं है जिसका उद्देश्य केवल वर्णन या स्वरूप का परिचय देना हो। जिन वाक्यों में किसी वस्तु की प्रशंसा की गई है उन्हें विधि के साथ जोड़ देना चाहिए और जिनमें निन्दा की गई है उन्हें निषेध के साथ।

धर्म की इस व्याख्या का लक्ष्य सामाजिक संगठन रहा है। कर्तव्याकर्तव्य के सम्बन्ध में व्यक्ति को जितनी स्वतंत्रता दी जायगी, उसी अनुपात में संगठन शिथिल होता जायेगा। वैदिक आर्यों का भारत के मूल-निवासियों के साथ बहुत दिनों तक युद्ध चलते रहे। इसके लिए दृढ़ संगठन की आवश्यकता थी और उसके लिए वैयक्तिक स्वातन्त्र्य का दमन किया गया। वैदिक युग का मनुष्य जन्म ही नहीं, अपि तु गर्भाधान से लेकर मृत्युपर्यन्त विधि-विधानों में बंधा हुआ है। उसके आनन्द पर भी शास्त्रीय नियन्त्रण है। धर्म की उपर्युक्त परिभाषा ने संगठन को दृढ़ बनाया दूसरी ओर व्यक्ति को कुंठित कर दिया।

उत्तरवर्त्ती काल में जैन, बौद्ध आदि अनेक परम्पराऐं नैतिकता एवं आध्यात्मिकता को केन्द्र में रखकर विकसित हुईं, किन्तु उन्होंने भी जब संगठन का रूप ले लिया तो धर्म की परिभाषा पुस्तक को लेकर की जाने लगी।

कुछ समय तक वेद की व्याख्या भी वर्ग-विशेष ने अपने हाथ में रखी। फलस्वरूप साधारण वर्ग का कर्त्तव्य ब्राह्मणों के आज्ञानुसार चलना हो गया। किन्तु धीरे-धीरे अन्य तत्त्वों का सम्मिश्रण होने लगा और व्याख्या में मतभेद ने प्रवेश कर लिया। दार्शनिक परम्पराओं का विकास हुआ, जो वेद को अन्तिम सत्य मानने पर भी परस्पर भेद रखती हैं। जीवन-पद्धति के रूप में भी अनेक मार्ग अस्तित्व में आये। फिर भी सामाजिक संगठन का ढांचा वही रहा। वेद के प्रति निष्ठा भारतीय संस्कृति का मुख्य तत्त्व है। साथ ही यह भी मानना होगा कि इस निष्ठा में सत्यान्वेषण की मात्रा बहुत कम है। वेद की बढ़-चढ़कर प्रशंसा करने वाले तथा उसके नाम पर मरने-मारने को तैयार रहने वाले अधिकतर ऐसे व्यक्ति हैं जिन्होंने उसे कभी नहीं पढ़ा। वे उसे हाथ जोड़कर फूल चढ़ाते हैं और जब पढ़ने की बात आती है तो अपने को अयोग्य कहते हैं।

वर्तमान भारतीय-संस्कृति को वैदिक-संस्कृति कहा जाता है, किन्तु उसमें वैदिक तत्त्वों की मात्रा बहुत कम है। वैदिक देवी-देवताओं का स्थान पौराणिक देवताओं ने ले लिया है, यज्ञों का स्थान भक्ति और दार्शनिक चिन्तन ने। विभिन्न दर्शन वैदिक-वाक्यों को प्रमाण मानते हैं, किन्तु उनकी व्याख्या तोड़-मरोड़कर अपनी-अपनी मान्यता के अनुसार करते हैं। दूसरे शब्दों में यों कहा जायेगा कि वेद एक झण्डे के समान संगठन का प्रतीक मात्र रह गया है, जीवन के साथ उसका सम्बन्ध नहीं रहा।

अनादि होने पर भी यह माना जाता है कि वेदों की प्रथम श्रुति ऋषियों को प्रातिभ-ज्ञान के रूप में हुई। जिस व्यक्ति का जीवन पवित्र और तपोमय होता है, उसके मन में जो कल्पनाएं उठती हैं वे भी मङ्गलमय होती हैं, उन्हीं को प्रातिभ-ज्ञान कहा जाता है। वैदिक परम्परा यह मानती है कि ऋषियों को वेदों का ज्ञान प्रातिभस्फूर्ति के रूप में प्राप्त हुआ। साथ ही उन्हें तत्त्वद्रष्टा माना जाता है, अर्थात् उन्होंने जीवन के जिन रहस्यों का साक्षात्कार किया, वेदों के रूप में उन्हें सबके सामने रख दिया।

ऋषियों के लिए कहा जाता है—"साक्षात्कृतधर्माण ऋषयो बभूवुः।" अर्थात् उन्हें जीवन के रहस्यों का साक्षात्कार हुआ।

ऋषियों के पश्चात् मुनियों का स्थान है। वे ऋषियों द्वारा प्रतिपादित सिद्धान्तों पर विचार करते हैं और अपने निष्कर्ष सर्वसाधारण के सामने उपस्थित करते हैं, इन्हीं निष्कर्षों को स्मृति कहा जाता है। धर्म की आधारमूलक व्याख्या में इनका द्वितीय स्थान है।

जो स्मृतियां श्रुति के अनुकूल हैं, उन्हें प्रमाण माना जाता है और जो प्रतिकूल हैं उन्हें अप्रमाण।

(२) व्यक्तिमूलक

धर्म की दूसरी व्याख्या सदाचार के आधार पर की जाती है। मनुस्मृति में इसे तीसरा स्थान दिया गया है। प्रथम दो स्थान श्रुति और स्मृति के हैं। सदाचार का अर्थ है भले आदमियों का रहन-सहन।

माण्डूक्य उपनिषद में विद्याध्ययन समाप्त हो जाने पर गुरु शिष्य को उपदेश देता है—"सच बोलना, धर्म का पालन करना, कभी सत्य से विचलित न होना, धर्म से विचलित न होना, शुभ कार्यों से विचलित न होना, धन-सम्पत्ति के लिए विचलित न होना, देव और पितरों के प्रति अपने कर्त्तव्य से विचलित न होना।

यदि तुम्हें कभी कर्त्तव्याकर्त्तव्य के विषय में संशय हो तो वहाँ चरित्र-सम्पन्न, त्यागी तथा तपस्वी के रहते ने जैसा करते हैं तुम भी वैसा ही करना।"

शास्त्रीय बातों में सन्देह होने पर पूर्वजों का चरित्र ही पथ-प्रदर्शक होता है इसी को सदाचार कहा गया। इसका दूसरा अर्थ नैतिक आचार किया जाता है, जिसकी चर्चा आगे की जाएगी।

इस व्याख्या का दूसरा रूप वैष्णव परम्पराओं में मिलता है। उपर्युक्त व्याख्या में भले आदमी के रूप में व्यक्ति विशेष को नहीं बताया गया। इसके स्थान पर कुछ विशेषण दिये गये हैं कि उसे ज्ञान-सम्पन्न, विचार-शील, सन्तोषी तथा त्यागी होना चाहिए। इन विशेषणों के कारण प्रस्तुत व्याख्या भी नैतिकता-प्रधान बन जाती है। किंतु वैष्णव परम्पराओं ने इसकी व्याख्या व्यक्ति को लेकर की।

महाभारत में आया है—"यतः कृष्णस्ततो धर्मो यतो धर्मस्ततो जयः" अर्थात् जिधर कृष्ण हैं वहीं धर्म है और जहां धर्म है वहीं जीत है।

व्यक्तिप्रधान व्याख्या का प्रारम्भ सैनिक संगठन को लेकर हुआ। जिसका मुख्य तत्त्व है-नेता में विश्वास। वहां आज्ञा-पालन और नेता की सुख-सुविधाओं पर ध्यान रखना सबसे बड़ा कर्त्तव्य होता है। साथ ही औचित्यानौचित्य का निर्णय नेता के जीवन को लेकर किया जाता है। जो उसके अनुकूल चलता है उसे धर्मात्मा कहा जाता है और

प्रतिकूल चलने वाले को पापी। धर्म की इसी व्याख्या को लेकर भक्ति-परम्पराओं का विकास हुआ।

भारतीय साहित्य में भक्तिवाद की मुख्य दो शाखाएँ मिलती हैं—रामभक्ति और कृष्णभक्ति। दोनों महापुरुषों के जीवन का अध्ययन करने पर पता चलता है कि वे वीर योद्धा थे। कालान्तर में उनकी व्याख्या परब्रह्म अथवा दार्शनिक तत्त्व के रूप में होने लगी। किन्तु यह केवल उनके उत्कर्ष को बढ़ाने का प्रयास था।

दोनों की जीवन-घटनाओं से पता चलता है कि उन्होंने नैतिकता अथवा सत्य का पालन नहीं किया। फिर भी उन्हें विजेता होने के कारण उच्च स्थान मिल गया। स्त्री-वध वर्जित है किन्तु राम ने ताडका को मार डाला। लक्ष्मण ने सूर्पणखा की नाक काट ली। राम ने बाली को धोखा देकर मारा। अग्निपरीक्षा होने पर भी सीता को निकाल दिया। शम्बूक नामक तपस्वी को निर्दोष होने पर भी मार डाला। फिर भी उन्हें मर्यादा पुरुषोत्तम कहा जाता है। पारिवारिक मर्यादा भारतीय संस्कृति का मुख्य तत्त्व है, कृष्ण ने उसे तोड़कर रासलीलाएँ प्रारम्भ कीं। गोपियों के वस्त्रों का अपहरण किया। फिर भी वे पूर्णावतार हैं। इतना ही नहीं उनके परिवार में प्रत्येक सदस्य को ईश्वरीय रूप मिल गया। जिनका प्रतिपादन चार व्यूहों के रूप में किया गया है। उनके बड़े भाई बलदेव शराब के नशे में चूर रहते थे। उन्हें संकर्षण के नाम से भगवान् का अंश माना गया। व्यूहों में द्वितीय स्थान वासुदेव कृष्ण का है; तृतीय उनके पुत्र अनिरुद्ध का और चौथा उनके पौत्र प्रद्युम्न का। राधा, रुक्मिणी आदि पत्नियों तथा उपपत्नियों को भी देवी-रूप दे दिया गया।

भक्तिमार्ग में कर्त्तव्याकर्त्तव्य का एकमात्र आधार भगवान् की प्रसन्नता है। जिन बातों से भगवान् प्रसन्न होते हैं वे कर्त्तव्य हैं और जिनसे अप्रसन्न होते हैं वे पाप। इसका आधार नैतिकता नहीं है।

मध्ययुग में नायिका-भेद का विस्तार के साथ वर्णन किया गया है। एक ही पुरुष का अनेक स्त्रियों के साथ सम्बन्ध होता था। परायी स्त्री के प्रति आकर्षण अपनी स्त्री की तुलना में स्वभावतः उत्कट होता है। उससे प्राप्त होनेवाला आनन्द भी तदनुसार तीव्र होता है। इसी धारणा को लेकर जार-भक्ति भावना का प्रतिपादन किया गया। भारतीय संस्कृति में पति-सेवा का बहुत महत्त्व है। वह कुल-मर्यादा की आधार शिला है। सामाजिक जीवन उसी पर

टिका हुआ है। हमारे धर्मग्रन्थ यह बताते हैं कि पति ही स्त्री का परमेश्वर होता है। किन्तु भक्ति-परम्परा ने पति-सेवा को छोड़कर भगवान् के साथ सम्बन्ध जोड़ने को कहा। बताने की आवश्यकता नहीं है कि अनेक आचार्यों ने अपने को भगवान् का प्रतिनिधि बताकर उसके स्थान पर अपने को केन्द्र बना लिया।

धार्मिक संगठन के इस रूप में उन्माद की मात्रा बहुत अधिक होती है। प्रत्येक भक्त, वह स्त्री हो या पुरुष अन्य किसी गुण के न होने पर भी अपने को दूसरों से उत्कृष्ट मानने लगता है। मूल्याङ्कन का एकमात्र आधार अपने अपने देवता के प्रति निष्ठा का उत्पन्न होना है। विद्या, चरित्र, त्याग, तपस्या आदि गुणों का मूल्य नहीं रहता। भक्तिवाद ने सामाजिक मर्यादाओं पर कठोर प्रहार किया। पुरुषार्थ के स्थान पर पराश्रय और अकर्मण्यता को प्रोत्साहन दिया। स्वस्थ शरीर और आजीविकोपार्जन की योग्यता होने पर भी भक्त वर्ग कोने में बैठकर भगवान् का नाम कीर्तन करने लगा और समाज का बोझ बन गया। बहुत से पुरुष भी स्त्रियों के कपड़े पहन कर उन्हीं के समान वार्तालाप करने लगे। जिस प्रकार एक राजा की बहुत सी रानियां दिन में यही चर्चा करती रहती हैं कि राजा किससे अधिक प्रेम करता है। पिछली रात को किसके पास आया था और आने वाली रात में किसके पास आएगा। इसी प्रकार वे पुरुष भी सौतिया डाह की बातें करते हैं। महिने में चार दिन रजस्वला होने का स्वाङ्ग भी रचते हैं।

### ३. दृष्टिमूलक

धर्म की तीसरी व्याख्या दृष्टिमूलक है, उसमें पुस्तक या व्यक्ति विशेष को मुख्यता नहीं दी गयी। उसके स्थान पर एक दृष्टि को रखा है। जो तत्त्व उस दृष्टि के समर्थक हैं वे धर्म हैं और जो विरोधी हैं वे अधर्म। इसके दो क्षेत्र हैं। प्रथम का सम्बन्ध सामाजिक जीवन के साथ है और द्वितीय का दार्शनिक सत्य के साथ। दूसरे शब्दों में प्रथम-क्षेत्र "स्व' और 'पर' के सम्बन्धों का निरूपण करता है और द्वितीय शाश्वत तथ्यों का। दृष्टि के भी तीन प्रकार हैं। यथा—

### (क) अभेददृष्टि

यहां समस्याओं का कारण 'स्व' और 'पर' में भेद माना गया है। प्रत्येक व्यक्ति होश सम्हालते ही दो घेरे बना लेता है। पहला घेरा 'स्व' का होता है। उसके परिवार, जाति, राष्ट्र आदि अनेक रूप हैं। जब इस घेरे का आधार भौगोलिक सीमाएँ होती हैं तो उसे राष्ट्र कहा जाता है; जब वंश परम्परा होती है तो उसे जाति, और जब धार्मिक विश्वास होते

हैं तो उसे पन्थ कहते हैं। राजनीतिक संगठन भी अपनी अपनी धारणाओं को लेकर घेरे खड़े करते हैं। वर्तमान युग में आर्थिक तथा अन्य स्वार्थों को लेकर नये नये घेरे बनते जा रहे हैं। यदि इनका लक्ष्य अपने-अपने क्षेत्र का विकास हो तो उन्हें उपादेय कहा जायेगा किन्तु अधिकतर उनकी रचना संघर्ष के लिए होती है। घेरे परस्पर टकराते हैं और जिन साधनों का उपयोग मानवीय सुख की वृद्धि के लिए होना चाहिए था उनका उपयोग परस्पर संहार के लिए होने लगता है।

इन घेरों को दूर करने के लिए वेदान्त का कथन है कि 'स्व' को इतना बड़ा बना दो कि उसमें सारा विश्व समा जाय, 'पर' कोई न रहे, जब तक दूसरा है भय बना रहेगा। जब सब एक हो गये तो कौन किससे डरेगा। इसी का नाम ब्रह्म साक्षात्कार है।

(ख) शून्यतादृष्टि

बौद्ध धर्म ने उसी तथ्य को दूसरे शब्दों में उपस्थित किया। उसका कथन है कि 'स्व' को इतना सूक्ष्म कर दो कि वह कुछ न रहे, सब कुछ 'पर' हो जाय। इसी को वहां 'शून्य-साधना' कहा गया है। बौद्ध-धर्म में प्रत्येक वस्तु क्षणिक तथा निस्सार है। उसके प्रति तृष्णा कैसी। वह मरु-मरीचिका के समान वञ्चना है।

जो ढेला जब तक अपने अहंकार को लेकर खड़ा है, ऊपर नहीं उठ सकता। कोई उसे उठाकर वेदी पर रख देता है तो अपने को ऊँचा समझने लगता है अहंकार से फूल जाता है। जब कोई मार्ग में चलते हुए ठोकर लगाता है तो अपमान समझता है और मन ही मन खिन्न होने लगता है। बालक उसे परस्पर प्रहार का साधन बनाकर एक दूसरे पर फेंकने लगते हैं और वह अपनी शक्ति का अभिमान करने लगता है। किन्तु वास्तव में देखा जाय तो अभिमान और तिरस्कार दोनों भावनाएँ सत्य से दूर हैं। व्यर्थ ही उसे दुःखी बनाती हैं। वास्तव में वह रजःकणों का पुञ्जमात्र है। यदि अहंकार और अस्तित्व की तृष्णा मिट जाय तो वह रजःकणों में परिणत हो जायेगा। उसके पश्चात् ऐसा कोई तत्त्व नहीं रहेगा जो उसे दुःखी कर सके। हवा का एक झोंका उसे पर्वत के शिखर पर पहुंचा देता है किन्तु वह शिखर और भूमि को एक ही दृष्टि से देखता है।

वेदान्त ने शाश्वत जीवन का रहस्य बताते हुए कहा कि बूँद को समुद्र में लीन हो जाना चाहिए। बौद्ध दर्शन ने कहा कि जीवन की तृष्णा ही दुःखों का मूल है। मृत्यु ही वास्तविक तत्त्व है। ऐसी मृत्यु जिसके पश्चात् जीवन न हो। इसी को मोक्ष, निर्वाण आदि शब्दों द्वारा प्रकट किया गया। जीवन एक बन्धन है, विकार है।

वेदान्त का ब्रह्म और बौद्धों का शून्य वास्तव में देखा जाय तो एक ही तत्त्व के दो नाम हैं। एक विद्यात्मक है और दूसरा निषेधात्मक। विद्यात्मक रूप में कुछ आकर्षण रहता है, जिससे मतिभ्रम होने का डर है। इसीलिए उपनिषदों ने नेति नेति पर बल दिया। शून्य वाद उसी बात को साहसपूर्वक सच्चे रूप में प्रस्तुत करता है।

### (ग) समतादृष्टि

तीसरी दृष्टि समता की है। यह व्यावहारिक दृष्टिकोण को लेकर चलती है। इसका कथन है कि 'स्व' और 'पर' दोनों सत्य हैं। किसी का अस्तित्व नहीं मिटाया जा सकता। प्रत्येक प्राणी अपने आप में इकाई है। अनन्त इकाइयों का नाम ही विश्व है। अस्तित्व अपने आप में संघर्ष का कारण नहीं होता। संघर्ष तब खड़ा होता है, जब एक व्यक्ति अपने स्वार्थ को दूसरे के स्वार्थ की तुलना में अधिक महत्त्व देने लगता है। अपने को उद्देश्य बना लेता है और दूसरे को विधेय। अपने को साध्य और दूसरे को साधन। इसी वैषम्य बुद्धि ने साम्राज्यवाद और आर्थिक वैषम्य को प्रोत्साहन दिया।

जैन-धर्म इसी वैषम्य को दूर करने पर बल देता है। वहां साधना का प्रारम्भ सामयिक से होता है जिसका अर्थ है जीवन में समता लाने का प्रयत्न। मुनि इस व्रत को समस्त जीवन के लिए अपनाता है और गृहस्थ कुछ समय के लिए दैनन्दिन साधना के रूप में।

क्षेत्र की दृष्टि से वैषम्य को दो भागों में विभक्त किया जा सकता है:— (१) व्यवहार में वैषम्य और (२) विचारों में वैषम्य। व्यवहार में वैषम्य के पुनः दो रूप हो जाते हैं।

१—दूसरे के अधिकार का अपहरण। और २—सञ्चय बुद्धि। जैन परिभाषा में इन्हीं को क्रमशः हिंसा और परिग्रह कहा गया है। व्यावहारिक समता का अर्थ है जीवन में अहिंसा और अपरिग्रह की प्राण-प्रतिष्ठा।

समता का दूसरा क्षेत्र विचारों से सम्बन्ध रखता है। जैन-धर्म का कथन है कि हम अपने विचारों को जितना महत्त्व देते हैं उतना ही दूसरे के विचारों को भी देना चाहिए। किसी धारणा को केवल अपनी होने के कारण छोड़ देना ठीक नहीं है। सत्य असीम है। प्रत्येक व्यक्ति अपनी अपनी योग्यता एवं परिस्थिति के अनुसार उसके किसी अंश को लेकर चलता है। उसके दृष्टिकोण को मिथ्या कहने का अर्थ है सत्य को खण्डित करना। विभिन्न

दृष्टिकोणों के समन्वय को ही जैन दर्शन में अनेकान्त कहा गया है। अहिंसा जैन-धर्म की आधार शिला है और अनेकान्त जैन-दर्शन की।

भगवान् महावीर ने 'आचाराङ्ग-सूत्र' में कहा है कोई प्राणी मरना नहीं चाहता, सभी को सुख प्रिय है और दुःख अप्रिय। जब तुम किसी को मारने या सताने जाते हो तो उसकी जगह अपने को रखकर सोचो। यदि वह व्यवहार तुम्हें अपने लिए अप्रिय जान पड़ता है तो दूसरे को भी अप्रिय लगेगा। यदि तुम नहीं चाहते कि कोई ऐसा व्यवहार तुमसे करे तो स्वयं भी दूसरों के साथ वैसा व्यवहार न करो।

जैन-धर्म भी परलोक, पुण्य-पाप तथा उनके शुभाशुभ फल को मानता है किन्तु उसका कथन है कि इन पर किसी अतीन्द्रिय शक्ति का नियन्त्रण नहीं है। उनमें स्वाभाविक कार्य-कारण भाव है। जो व्यक्ति भूख न रहने पर भी भोजन करता है, अजीर्ण का शिकार हो जाता है। कोई बाह्यशक्ति रोग उत्पन्न नहीं करती। उसका कारण वह स्वयं है।

बिना सोचे-समझे गड्ढे की ओर चलने वाला उसमें गिर जाता है। कोई बाह्य शक्ति गिराने नहीं आती। प्रत्येक व्यक्ति को अपने शुभाशुभ कर्म का फल अवश्य मिलता है। राजा हो या रङ्क, ब्राह्मण हो या शूद्र, कोई उससे छूट नहीं सकता। इस प्रकार जैन-धर्म नैतिक समता का सिद्धान्त प्रस्तुत करता है।

जैन-धर्म जाति-वर्ण आदि के आधार पर मानव और मानव में किसी भी प्रकार का भेद नहीं करता। प्रत्येक व्यक्ति को, वह ब्राह्मण हो या शूद्र पुरुष हो या स्त्री, आध्यात्मिक विकास का अवसर देता है। मुक्त अवस्था में सभी जीव एक समान हो जाते हैं कोई छोटा या बड़ा नहीं रहता। इस प्रकार वह आध्यात्मिक समता को प्रस्तुत करता है।

४ लक्ष्यमूलक—

धर्म की चौथी व्याख्या लक्ष को लेकर की जाती है। इसके भी अनेक रूप हैं। कहीं वैयक्तिक सुख को लक्ष्य माना गया और कहीं सामाजिक सुख को। कहीं ऐहिक भोगों को, कहीं स्वर्ग को और कहीं मोक्ष को। कहीं उसका निरूपण विध्यात्मक किया गया और कहीं निषेधात्मक।

मनुस्मृति में कहा गया है–

"धारणाद्धर्ममित्याहुः धर्मो धारयते प्रजाः"

धर्म, प्रजा का धारण अर्थात् उसका संरक्षण एवं सञ्चालन करता है।

प्रस्तुत व्याख्या सामाजिक जीवन को महत्त्व देती है। धर्महीन समाज में अनैतिकता फैल जाती है और जङ्गली प्राणियों के समान एक मनुष्य दूसरे मनुष्य को खाने लगता है। धर्म यह सिखाता है कि हम अपने प्राणों को जितना महत्त्व देते हैं उतना ही दूसरे के प्राणों को भी देना चाहिए। इस प्रकार वह समाज में सुरक्षा का वातावरण उत्पन्न करता है। इस व्याख्या का सम्बन्ध परलोक या आध्यात्मिकता के साथ नहीं है। इसी आशय की दूसरी व्याख्या है—

"धर्म एव हतो हन्ति धर्मो रक्षति रक्षितः"।

अर्थात् जो समाज धर्म का नाश करता है, वह नष्ट हो जाता है और जो उसका पालन करता है वह सुरक्षित रहता है।

प्रायः समस्त प्राचीन जातियों में धर्म की यही व्याख्या रही है। किन्तु बहुत सी जातियों ने रक्षा के उद्देश्य को सीमित कर दिया। उनकी दृष्टि में अपने समाज के जीवन का जो मूल्य था वह दूसरे समाज को नहीं दिया गया। यहूदी विधर्मियों की हत्या तथा उनकी स्त्रियों के साथ बलात्कार को पाप नहीं मानते। मुसलमानों ने भी व्यावहारिक रूप में इसी धारणा का अनुसरण किया। ऐसी परम्पराएँ धर्म के सच्चे रूप पर नहीं पहुँच सकीं। क्षेत्रीय सीमाओं ने उसे अधर्म बना दिया। भारतीय परम्पराओं ने भी धर्म की इस व्याख्या को स्वीकार किया किन्तु उसे भौगोलिक तथा जातीय सीमाओं से परे रखा। इसका लक्ष्य विश्वबन्धुत्व हो गया। वर्तमान विश्व इस तथ्य को स्वीकार कर रहा है कि जब तक जातीय अथवा राष्ट्रीयता के नाम पर परिधियाँ बनी रहेंगी, युद्धों से छुटकारा नहीं मिल सकता। इन परिधियों को हटाकर समस्त विश्व में एकता की स्थापना ही धर्म का उद्देश्य है। तभी वह मानवता के लिए वरदान बन सकता है।

कणाद ने उसकी व्याख्या सांसारिक सुख और मोक्ष दोनों को लक्ष्य में रखकर की है। उसका कथन है। 'यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः"

अर्थात् धर्म उस तत्त्व का नाम है जो अभ्युदय और निःश्रेयस दोनों को प्राप्त कराता है। अभ्युदय का अर्थ है सांसारिक सुख और निःश्रेयस का अर्थ है मोक्ष।

सांसारिक सुख का वर्णन दो रूपों में मिलता है। प्रथम का सम्बन्ध सामाजिक जीवन के साथ है। जिस समाज में एक व्यक्ति दूसरे व्यक्ति का शोषण नहीं करता, परस्पर विश्वास और सहयोग रहता है, वह समाज उत्तरोतर उन्नति करता जाता है। हिंसा, असत्य, ठगी

आदि बुराइयां समाज को छिन्न-भिन्न कर डालती हैं। धर्म इन बुराइयों से दूर रहने के लिए कहता है, और इस प्रकार सामाजिक सुख की वृद्धि करता है।

अभ्युदय की दूसरी व्याख्या व्यक्ति-लक्षी परम्पराओं में मिलती है। वहां इसका सम्बन्ध प्रायः स्वर्ग या दूसरे जन्म के साथ बताया गया है। इन परम्पराओं में धर्म की व्याख्या नैतिकता तक सीमित नहीं है। वे त्याग और तपस्या पर बहुत अधिक बल देती हैं। उनकी दृष्टि में साधना का चरम लक्ष्य मोक्ष है, किन्तु जिस साधक की तपस्या उतनी उत्कृष्ट नहीं होती वह मरकर स्वर्ग प्राप्त करता है और सांसारिक सुखों को भोगता है।

सभी धर्म साधना को आत्मशुद्धि का मार्ग बताते हैं। मोक्ष, शुद्धि की चरम अवस्था है। इस प्रकार आत्मसाधना और मोक्ष में स्वाभाविक कार्यकारण भाव है, किन्तु स्वर्ग एक ऐसी कल्पना है जिसका तपस्या अथवा चरित्र के साथ मेल नहीं बैठता।

प्रत्येक देवता उत्पन्न होते ही जवान हो जाता है और मृत्यु पर्यन्त जवान रहता है। कभी बुढ़ापा नहीं आता। सारी उम्र अप्सराओं के साथ क्रीड़ाएँ करता है। जिस धर्म का सम्बन्ध वैश्य जाति के साथ रहा उसने वहां रत्नों के ढेर बतलाये। जिसका क्षत्रिय जाति के साथ, उसने अप्सराओं का वर्णन किया। मुसलमानों ने शराब के झरनों का वर्णन किया। संक्षेप में जिस परम्परा ने ऐहिक जीवन में जिस बात को बुरा बताया, स्वर्ग में उसी का बढ़ा-चढ़ा कर वर्णन किया। मनोवैज्ञानिक दृष्टि से यह अतृप्त कामनाओं को पूर्ण करने की मानसिक प्रक्रिया है। जब हम देखते हैं कि वही परम्परा एक ओर ब्रह्मचर्य और अपरिग्रह पर अत्यधिक बल दे रही है दूसरी ओर उनके फल के रूप में अप्सराओं और रत्नों के ढेर का वर्णन कर रही है तो समझ में नहीं आता कि किसका महत्त्व अधिक है, साधन का या फल का।

कणाद ने दूसरा फल 'निःश्रेयस' बताया है। जिसका अर्थ है मोक्ष। इसकी व्याख्या भी दो रूपों में मिलती है। विधि-मुखी और निषेध-मुखी।

वैष्णव परम्पराएँ विधि-मुखी व्याख्या करती हैं। वहाँ यह माना गया है कि वैकुण्ठ में भगवान् सिंहासन पर विराजमान हैं। उनके दरबार में निरन्तर नृत्य चलता रहता है। मोक्ष प्राप्त करने वाले भक्त उनकी सेवा में रहते हैं। भक्तिवादी परम्पराओं में किसी ने कहा कि वे लोग उनके सेवक या अनुचर के रूप में रहते हैं, किसी ने कहा मित्र या सखा के रूप में। किसी ने कहा बन्धु के रूप में और किसी ने कहा उन्हीं के स्वरूप में विलीन हो जाते हैं। इन रूपों को सालोक्य, सामीप्य, सायुज्य आदि शब्दों द्वारा प्रकट किया जाता है। मोक्ष का यह रूप सामन्तवादी मनोवृत्ति को प्रकट करता है। जहां दरबारी लोग निजी पुरुषार्थ

और तेज खोकर सामन्त का मुँह ताकते रहते हैं। उस के सुख को अपना सुख उसके सम्मान को अपना सम्मान और उसके अपमान को अपना अपमान मानते हैं उसकी कृपादृष्टि एवं मुस्कुराहट के लिए लालायित रहते हैं। वह समस्त मर्यादाओं और मूल्यों का केन्द्र बन जाता है।

दूसरी व्याख्या निषेधमुखी है। भारतीय संस्कृति जीवन को एक अभिशाप मानती आ रही है। महाकवि कालिदास का कथन है "मरणं प्रकृतिः शरीरिणां विकृतिर्जीवनमुच्यते बुधैः" अर्थात् मृत्यु स्वभाव है, और जीवन विकार। साधना की प्रायः समस्त परम्पराओं ने जीवन को बन्धन और दुःख बताया है और उससे छुटकारे का नाम ही मोक्ष है।

प्रश्न होता है कि जब जीवन नहीं होता तो क्या रहता है ? विभिन्न परम्पराओं ने इसका उत्तर विभिन्न रूप में दिया।

बौद्ध-परम्परा का उत्तर साहसपूर्ण और सत्य के अत्यन्त निकट है। वहाँ मोक्ष के स्थान पर निर्वाण शब्द मिलता है। मोक्ष का अर्थ है छुटकारा। इससे यह संकेत मिलता है कि कोई बन्धन में फँसा हुआ है उस अवस्था में वह छुटकारा प्राप्त कर लेता है। फिर भी उसका व्यक्तित्व बना रहता है। इसके विपरीत बौद्ध परम्परा का कथन है कि अस्तित्व अपने आप में बन्धन है। बन्धन से छूटने का अर्थ है अस्तित्व का समाप्त होना। इसी का दूसरा नाम निर्वाण है।

इसका शब्दार्थ है बुझ जाना। अश्वघोष ने इसकी व्याख्या में कहा है जिस प्रकार दिया बुझ जाने पर न पृथ्वी में जाता है, न आकाश में, न किसी दिशा में और न विदिशा में। तेल समाप्त हो जाने के कारण समाप्त हो जाता है। इसी प्रकार आत्मा निर्वाण प्राप्त हो जाने पर न पृथ्वी में जाता है और न आकाश में, न किसी दिशा में और न विदिशा में। संस्कार समाप्त हो जाने के कारण वहीं शान्त हो जाता है। बौद्ध धर्म में आत्मा 'स्कन्ध' अर्थात् पांच तत्त्वों का पुञ्ज है। वे हैं रूप, विज्ञान, वेदना, संज्ञा और संस्कार। प्रतिक्षण इनका प्रवाह चलता रहता है। अनुभूतियां संस्कार उत्पन्न करती हैं और संस्कार नयी अनुभूतियों को। जब साधना द्वारा नयी अनुभूतियां बन्द कर दी जाती हैं और प्राचीन संस्कार अपना अपना फल देकर समाप्त हो जाते हैं तो उसके पश्चात् कुछ नहीं बचता। इसी का नाम 'निर्वाण' है। पर्वतों पर पानी बरसता है और जमकर बर्फ का रूप ले लेता है। बर्फ पिघलकर बहने लगती है और स्रोत का रूप ले लेती है। इसी का नाम जीवन है। जब शिखर पर जमी हुई बर्फ समाप्त हो जाती है तो स्रोत अपने आप सूख जाता है,

निर्वाण है। बौद्ध दर्शन में साधना का लक्ष दुःखों से छुटकारा है किसी विध्यात्मक सुख की प्राप्ति नहीं।

न्यायदर्शन के अनुसार मोक्ष में आत्मा का अस्तित्व तो रहता है किन्तु ऐसी कोई विशेषता नहीं रहती जिसके आधार पर उसे जड़ वस्तुओं से पृथक् किया जा सके। वहां आत्मा की नौ विशेषताएँ मानी गई हैं। ज्ञान सुख, दुःख, इच्छा, द्वेष, प्रयत्न, धर्म, अधर्म और संस्कार। मुक्त अवस्था में इनमें से कोई नहीं रहता।

सांख्यदर्शन ने अस्तित्व के साथ चेतना को भी स्वीकार किया। किन्तु वह निराकार चेतना है। अर्थात् ज्ञान होने पर भी किसी वस्तु का भान नहीं होता। वह ऐसा प्रकाश है जो किसी वस्तु को आलोकित नहीं करता। वेदान्त ने चेतना के साथ आनन्द को भी मान लिया, किन्तु उसकी व्याख्या अभाव रूप में की। जैनधर्म ने ज्ञान के दो भेद कर दिये साकार और निराकार। साकार में वस्तुओं का भान होता है वहां सत्ता के स्थान पर अनन्तवीर्य रखा गया, जिसका अर्थ है शक्ति। किन्तु वह शक्ति कभी काम नहीं करती। इस प्रकार हम देखते हैं कि विध्यात्मक प्रतिपादन होने पर भी अन्तिम निष्कर्ष निषेधात्मक ही निकलता है।

मोक्ष का यह स्वरूप भारतीय जीवन के शाश्वत स्वर को प्रकट करता है, वह बताता है कि राजा तथा अल्पसंख्यक वर्ग को छोड़कर सामान्य जनता का जीवन कष्टपूर्ण था। प्राकृतिक तथा मनुष्यकृत विपत्तियां आती रहती थीं, इसी परिस्थिति ने निषेधमुखी लक्ष्य की स्थापना की और वह भारतीय संस्कृति का मुख्य स्वर बन गया।

भगवान् बुद्ध ने अपने शिष्यों को विदा देते हुए कहा था—

"चरक्ष भिक्खवे चारिकम्, आदि कल्याणं, मध्य कल्याणं अन्त कल्याणं"

अर्थात् हे भिक्षुओं! ऐसी चर्चा का पालन करना जो आदि, मध्य और अन्त तीनों अवस्थाओं में कल्याणकारी हो। जो अपने तथा पराये दोनों के लिए मङ्गलमय हो। धर्म की यही ही व्याख्या है। वह प्रारम्भ से लेकर अन्त तक मङ्गलमय होता है, उससे शत्रु और मित्र दोनों का भला होता है, बुरा किसी का नहीं होता।

जैन धर्म के दशवें कालिक सूत्र में कहा गया है "धम्मो मंगल मुक्कीट्ठं" अर्थात् धर्म उत्कृष्ट मङ्गल है। इसका भी वही अर्थ है। उत्कृष्ट मङ्गल कभी अमङ्गल नहीं होता। साथ ही उससे किसी का अमङ्गल नहीं होता। इसी का विस्तार करते हुए वहां धर्म के तीन भेद बताये गये हैं—

अहिंसा, संयम, और तप। अहिंसा सामाजिक जीवन को पवित्र बनाती है, संयम वैयक्तिक जीवन को और तप समस्त निर्बलताएँ दूर करके व्यक्ति को शक्तिशाली बनाता है।

## ५ सर्वग्राही व्याख्या

मनुस्मृति में भारतीय संस्कृति का सर्वग्राही रूप मिलता है। ऊपर बताया गया है कि वैदिक परम्परा समाजवादी और कर्म प्रधान रही है। ऋग्वेद और यजुर्वेद में संन्यास का विधान नहीं है। ईशोपनिषद् में आया है—

"कुर्वन्नेवेह कर्माणि जिजीविषेत् शतं समाः"

अर्थात् व्यक्ति को कर्म करते हुए ही सौ वर्ष तक जीने की इच्छा करनी चाहिए।

किन्तु उत्तरवर्ती उपनिषदों में साधना का स्वर बदल गया। वहां कर्म का स्थान संन्यास ने ले लिया। ऋषि कहते हैं जब इस जीवन पर भी हमारा नियन्त्रण नहीं है तो सन्तान और धन का क्या करेंगे। यही स्वर जैन बौद्ध और श्रमण आदि परम्पराओं में विकसित हुआ। वैदिक परम्परा में गृहस्थाश्रम जीवन का मुख्य तत्त्व माना गया। ब्रह्मचर्याश्रम को उसकी तैयारी और वानप्रस्थ को विश्राम। श्रमण परम्परा में सन्यास को मुख्य लक्ष्य बताया गया और गृहस्थाश्रम को एक दुर्बलता।

मनु ने चार आश्रमों के रूप में दोनों परम्पराओं का समन्वय कर दिया। गृहस्थाश्रम में सामाजिक प्रवृत्तियों और कर्म मार्ग को महत्त्व दिया गया उसके पश्चात् वृद्धावस्था में सन्यास और तत्त्वचिन्तन को। यह समन्वय हिन्दू संस्कृति का सर्वग्राही रूप है।

मनु ने धर्म की व्याख्या भी सर्वग्राही रूप में की। उसका कथन है—

श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः।
एतच्चतुर्विधं प्राहुः पूर्वे धर्मस्य लक्षणम्॥

प्रस्तुत श्लोक में सर्वप्रथम श्रुति को रखा गया है जो तत्त्वदर्शी ऋषियों की उपलब्धियां हैं। मुनियों ने उस पर मनन किया जो स्मृतियों के रूप में सङ्गृहीत है। जिन दार्शनिक धाराओं का वेदों से विरोध नहीं है वे भी इसी कोटि में आते हैं। तीसरा स्थान सदाचार अर्थात् भले आदमियों के रहन सहन का है जिसे रीति रिवाज या परम्परा कहा जाता है। चौथा तत्त्व आत्मा का प्रिय अथवा हित है। इसके दो रूप हैं—लौकिक और लोकोत्तर। लौकिक हित को अभ्युदय कहा जाता है और लोकोत्तर हित को निःश्रेयस।

बृहदारण्यक उपनिषद् में याज्ञवल्क्य मैत्रेयी को कहते हैं। "आत्मनस्तु कामाय सर्वम् प्रियम्भवति" अर्थात् धन, सम्पत्ति, सन्तान, स्त्री आदि समस्त वस्तुयें इसी लिए अच्छी लगती हैं क्योंकि वे आत्मा को तृप्त करती हैं। वे अपने आप लक्ष्य नहीं हैं। सुख का केन्द्र आत्मा है और वही समस्त प्रवृत्तियों का लक्ष्य है। इस प्रकार आत्मजिज्ञासा जीवन का लक्ष्य बन गई और धर्म ने साधना का रूप ले लिया। मनुस्मृति में इसी का सङ्केत 'स्वस्य च प्रियमात्मनः' के रूप में है।



## प्रारम्भादधुनावधि

## वाराणसेयसंस्कृतविश्वविद्यालयतः

### 'विद्यावारिधि' ( पीएच० डी० ) उपाधिप्राप्तवतां विवरणम्

| क्र० सं० | अनुसन्धाता | शोधप्रबन्धः | विशेषः |
|---|---|---|---|
| | | १९६३ | |
| १. | श्रीमुरारिलालशर्मा | ग्रहगणित-मीमांसा | प्रकाशितः |
| | | १९६४ | |
| २. | सुश्री-मायामालवीया | अथर्ववेदे शान्तिपुष्टिकर्माणि | ,, |
| ३. | श्रीकृष्णचन्द्रद्विवेदी | सूर्यग्रहणम् | ,, |
| ४. | श्रीभागीरथप्रसादत्रिपाठी | पाणिनीयधातुपाठसमीक्षा | ,, |
| ५. | श्रीविनायकत्रिपाठी | अग्निचयनम् | ,, |
| ६. | श्रीआद्याप्रसादमिश्रः | प्रक्रियाकौमुदीविमर्शः | ,, |
| | | १९६५ | |
| ७. | स्वामी सर्वदानन्दपरमहंसः | श्रीशङ्करसिद्धान्त-श्रीवल्लभब्रह्मसूत्रार्थसमीक्षा सिद्धान्तयोः | |
| ८. | श्रीकुबेरनाथपाठकः | कात्यायनश्रौतसूत्रस्यापस्तम्बबौधायनश्रौत-सूत्राभ्यां सह तुलना | |
| ९. | श्रीमाधवचैतन्य-ब्रह्मचारी | शब्दशक्तिः | |
| १०. | श्रीमुरलीधरचतुर्वेदी | सिद्धान्तकौस्तुभः | |
| ११. | श्रीसतीप्रसादमिश्रः | कात्यायनवार्तिकानां समीक्षात्मकमध्ययनम् | |
| १२. | श्रीकृष्णमणित्रिपाठी | पुराणेतिहासयोः सांख्ययोगदर्शनविमर्शः | |
| | | १९६६ | |
| १३. | श्रीजयशङ्करद्विवेदी | महाकविकालिदासाचार्याश्वघोषयोः शैलीशब्द-भाषाकाव्यकलानां तुलनात्मिकी समीक्षा | |
| १४. | श्रीरामाधारचतुर्वेदी | चन्द्रश्रृङ्गोन्नतिः | |

| | | |
|---|---|---|
| १५. | श्रीसीतारामशुक्लः | अव्ययविवेकः |
| | | १९६७ |
| १६. | श्रीकृष्णदेवः | संहितासु विश्वेदेवाः |
| १७. | श्रीरामवृक्षचतुर्वेदी | संस्कृतसाहित्ये विरहवर्णनम् |
| १८. | श्रीजानकीप्रसादद्विवेदी | पाणिनीयव्याकरणे शास्त्रीयसंज्ञानां तात्पर्यविमर्शः |
| १९. | श्रीटीकाराम-पंथी | पाणिनीयव्याकरणात् प्राक्तनव्याकरणानां पर्यालोचनम् |
| २०. | श्रीराधेश्याममिश्रः | व्याकरणशास्त्रदृष्ट्या जातिस्वरूपविमर्शः |
| | | १९६८ |
| २१. | श्रीहरदेवप्रसादत्रिपाठी | पाणिनीयव्याकरणे परिभाषाया अध्ययनम् |
| २२. | स्वामी किशोरदासः | भारतीयदर्शनेषु मुक्तिमीमांसा |
| २३. | श्रीव्रजरङ्गद्विवेदी | भास्कराचार्यसिद्धान्तसमीक्षा |
| २४. | कु० रमामिश्रा | वैदिककालादारभ्य वैवाहिकी शास्त्रीयव्यवस्था |
| २५. | श्रीसुशीलचन्द्रमिश्रः | वाक्यपदीयानुसारं दर्शनान्तरीयतत्त्वानां तुलनात्मकं समीक्षणम् |
| २६. | श्रीनरदेवशास्त्री | शब्दार्थसम्बन्धे पाणिनीयसिद्धान्तः |
| २७. | श्रीसुरेन्द्रपाण्डेयः | काश्मीरशैवागमतत्त्वविवेचनम् |
| | | १९६९ |
| २८. | श्रीदेवराजपौडेलः | सप्तमशतकाद् द्वादशपर्यन्तानां भारतीयप्रकाशितसंस्कृतशिलालेखानां साहित्यिकविवेचनम् |
| २९. | श्रीकमलाकान्तशुक्लः | संस्कृतसाहित्ये हास्यरसः |
| ३० | श्रीकृष्णविहारीमिश्रः | संस्कृतकाव्यशास्त्रे भक्तिरसविवेचनम् |
| ३१. | श्रीसूर्यप्रसादमिश्रः | वाल्मीकिरामायणे अलंकारविमर्शः |
| ३२. | श्रीमधुकरफाटकः | पाणिनीयशिक्षायाः शिक्षान्तरैः सह समीक्षात्मकमध्ययनम् |
| ३३. | श्रीरामशरणशास्त्री | पाणिनीयव्याकरणे वैशेषिकतत्त्वमीमांसा |
| ३४. | श्रीरामचन्द्रपाण्डेयः | चन्द्रगोल-विमर्शः |
| ३५. | श्रीनन्दकिशोरपाण्डेयः | गृह्यसूत्राणां सामाजिकमनुशीलनम् |
| ३६. | श्रीशिवनाथचतुर्वेदी | वैदिकसाहित्ये मणिमन्त्रौषधीनामुपयोगः |

| | | |
|---|---|---|
| ३७. | श्रीलालबिहारिशर्मा पाण्डेयः | पुराणेषु सर्गविषयकमतवादानां समन्वयः |
| ३८. | श्रीबदरीनारायणपञ्चोली | श्रीमद्भागवतीयं सांख्यम् |
| ३९. | श्रीनरेशझाः | प्राचीनभारते शारीरिकी शिक्षा |
| ४०. | श्रीधुनिरामत्रिपाठी | प्राच्यभारतीयम् ऋतुविज्ञानम् |
| ४१. | श्रीविन्ध्येश्वरपाण्डेयः | जीवात्मस्वरूपविमर्शः |
| ४२. | कु० प्रज्ञादेवी | काशिकायाः समीक्षात्मकमध्ययनम् |
| ४३. | स्वामी आत्मानन्दपरमहंसः | वैदिकदर्शनेषु ज्ञानविषयकं विचाराणां पर्यालोचनम् |



## प्रारम्भादधुनावधि

## वाराणसेयसंस्कृतविश्वविद्यालयतः

### 'वाचस्पति' ( डी० लिट्० ) उपाधिप्राप्तवतां विवरणम्

| क्र० सं० | अनुसन्धाता | शोधप्रबन्धः |
|---|---|---|
| | | १९६८ |
| १. | श्रीरामप्रसादत्रिपाठी | पाणिनीयव्याकरणे प्रमाणसमीक्षा |
| | | १९६९ |
| २. | श्रीअशोकचट्टोपाध्यायः | मैथिलस्मार्त्तः श्रीदत्तोपाध्यायस्तस्य समयप्रदीपश्च |
| ३. | श्रीवाचस्पतिउपाध्यायः | प्राचीनभारते अन्ताराष्ट्रियसम्बन्धः |
| ४. | श्रीमुरलीधरपाण्डेयः | श्रीमच्छङ्कराचार्यात् पूर्वमद्वैतवादः |
| ५. | श्रीबद्रीनाथसिंहः | न्यायमते शाब्दबोधविमर्शः |
| ६. | श्रीभागीरथप्रसादत्रिपाठी | धात्वर्थविज्ञानम् |



रजिस्टर्ड न्यूजपेपर्स एक्ट के नियम के अन्तर्गत

## विज्ञप्ति

| | |
|---|---|
| १. प्रकाशन का नाम | सारस्वती सुषमा |
| २. प्रकाशन की तिथि | त्रैमासिक |
| ३. मुद्रक का नाम | श्री घनश्याम उपाध्याय |
| राष्ट्रियता | भारतीय |
| पता | वाराणसेय संस्कृत विश्वविद्यालय मुद्रणालय, वाराणसी। |
| ४. प्रकाशक का नाम | श्री बदरीनाथ शुक्ल |
| राष्ट्रियता | भारतीय |
| पता | वाराणसेय संस्कृत विश्वविद्यालय, वाराणसी। |
| ५. सम्पादक का नाम | श्री बदरीनाथ शुक्ल |
| राष्ट्रियता | भारतीय |
| पता | वाराणसेय संस्कृत विश्वविद्यालय, वाराणसी। |
| ६. स्वामित्व | वाराणसेय संस्कृत विश्वविद्यालय, वाराणसी। |

मैं श्री बदरीनाथ शुक्ल घोषित करता हूँ कि उपरिलिखित विज्ञप्ति मेरी जानकारी के अनुसार बिलकुल ठीक है।

श्री बदरीनाथ शुक्ल
हस्ताक्षर

# सारस्वती सुषमा

## वाराणसेयसंस्कृतविश्वविद्यालयपत्रिका

१. एषा देशे विदेशे च लब्धप्रसरा त्रैमासिकी संस्कृतपत्रिका।

२. अस्याः प्रकाशनं प्रतिवर्षं ज्येष्ठ-भाद्रपद-मार्गशीर्ष-फाल्गुनपूर्णिमासु भवति।

३. अस्याः प्रधानमुद्देश्यं संस्कृतज्ञेषु मौलिकानुसन्धानप्रवृत्तेः समालोचनाप्रवृत्तेश्चोद्बोधनं प्रोत्साहनं चास्ति।

४. अस्यां वाराणसेयसंस्कृतविश्वविद्यालयस्थानामन्येषां च विदुषां मौलिकविचारपूर्णा अनुसन्धानप्रधाना निबन्धाः प्रकाश्यन्ते।

५. लेखकेन प्रकाशितस्य निबन्धस्य पञ्चविंशतिः प्रतिमुद्रणान्युपलब्धानि स्युः।

६. अस्यां पत्रिकायां विशिष्टानां हिन्दीसंस्कृताङ्ग्लग्रन्थानां समालोचनाः प्रकाश्यन्ते। तदर्थं ग्रन्थकृद्भिर्ग्रन्थस्य द्वे प्रती प्रेषयितव्ये।

७. अस्या वार्षिकं मूल्यं सप्त रूप्यकाणि, प्रत्यङ्कं च रूप्यकद्वयं वर्तते।

८. पत्रिकासम्बन्धी सर्वविधः पत्रव्यवहारः "सम्पादक, सारस्वती सुषमा, वाराणसेय-संस्कृत-विश्वविद्यालय, वाराणसी—२" इति सङ्केतेन विधेयः।

---

प्रकाशक—सञ्चालक, अनुसन्धान संस्थान, वाराणसेय संस्कृत विश्वविद्यालय, वाराणसी।
मुद्रक—श्री घनश्याम उपाध्याय, वाराणसेय संस्कृत विश्वविद्यालय मुद्रणालय, वाराणसी।
मु० सं०-४।७०।